# निर्णयसागरस्थविक्रेयसंस्कृतपुस्तकानि ।



| | मू० | डा.व्य. |
|---|---|---|
| **अनुभूतिप्रकाशः**—विद्यारण्यस्वामिकृतः. ... ... ... | १ | ८-॥ |
| **अभिधानसंग्रहः**—प्रथमो भागः. ... ... ... ... | १ | ८- |
| **अभिधानसंग्रहः**—द्वितीयो भागः. ... ... ... ... | १। | ८= |
| **अभिज्ञानशाकुन्तलं नाटकम्**—आङ्ग्लटिप्पणीयुतम्. ... | २ | ८=॥ |
| **अष्टाङ्गहृदयमूलम्**—श्रीमद्वाग्भटविरचितं (मूलमात्रम्). ... | १ | ८=॥ |
| **अष्टाङ्गहृदयम्**—वाग्भटकृतं—सूत्र-शारीर-निदान-चिकित्सा-कल्प-उत्तरस्थानसहितं, श्रीमदरुणदत्तप्रणीतया सर्वाङ्गसुन्दराख्य-टीकया विभूषितं च. ... ... ... ... ... ... | ८ | ।≡ |
| **अष्टाविंशत्युपनिषदः**—( गुटका, उपनिषदः २८ ) ... | ॥। | ८= |
| **आह्निकचन्द्रिका**—( सायनमन्त्रभाष्यसहिता ) ... ... | ॥। | ८= |
| **उत्तररामचरितम्**—महाकविश्रीभवभूतिप्रणीतं, वीरराघवकृ-तया टीकया समेतम्. ... ... ... ... ... | ॥। | ८-॥ |
| **ऋक्संहितापदपाठः**—( पदानि ). ... ... ... ... | ३ | ।= |
| **कथासरित्सागरः**—महाकविश्रीसोमदेवभट्टविरचितः, एतस्मिन् पृथक् पृथक् मनोहराः १२४ कथाः सन्ति. ... ... | ५ | ।≡ |
| **कादम्बरी**—बाणभट्टकृता, भानुचन्द्रसिद्धचन्द्रप्रणीतया टीकया सहिता | ५ | ।= |
| **कारिकावली**—(सिद्धान्तमुक्तावलीसहिता). ... ... ... | ।= | ८- |
| **किरातार्जुनीयं काव्यम्**—भारविकृतं, मल्लिनाथकृतया घण्टापथटीकया सहितम्. ... ... ... ... ... | १॥ | ८= |
| **कुमारसंभवं काव्यम्**—कालिदासकृतं, मल्लिनाथकृतया ( १–८ सर्गपर्यन्तं ), सीतारामकृत ( ८–१७ सर्गपर्यन्तं ), संजी-विन्या टीकया सहितं च. ... ... ... ... ... | २ | ।· |
| **कुवलयानन्दः**—( चंद्रालोक-अलंकारचन्द्रिकाव्याख्यासहितः ). | ॥= | ८= |
| **गरुडपुराणम्**—सटीकं, सारोद्धारः. ... ... ... ... | ॥= | ८-॥ |
| **गीतगोविन्दम्**—महाकविश्रीजयदेवविरचितं, कुम्भनृपतिप्रणी-तया रसिकप्रियाव्याख्यया, महामहोपाध्यायशंकरमिश्रनि-र्मितया रसमञ्जरीव्याख्यया च संवलितम्.... ... ... | ॥। | ८-॥ |
| **चम्पूभारतम्**—रामचन्द्रबुधेन्द्रविरचितया व्याख्यया समेतम्. | २॥ | ।· |
| **चम्पूरामायणम्**—श्रीभोजराजविरचितं (पञ्चमकाण्डपर्यन्तं), लक्ष्मणसूरिविरचितं ( षष्ठकाण्डमात्रं ), रामचन्द्रबुधेन्द्रविर-चितया व्याख्यया समेतम्.... ... ... ... ... | २ | ८-॥ |
| **चरकसंहिता**—अग्निवेशकृता चरकप्रतिसंस्कृता मूलमात्रम्. ... | २ | ।· |
| **तर्कसंग्रहः**—न्यायबोधिनीपदकृत्यव्याख्याटिप्पणैः संवलितः. ... | ।- | ८- |

**ताजकनीलकण्ठी**—सटीका, अयं प्राचीनो ज्योतिर्ग्रन्थः जन्मपत्रिकाया वर्षफलकरणेऽतीवोपयुक्तः। तथा फलकथने प्रश्नविषये च। एतदन्तर्गतान्युदाहरणानि ज्योतिर्विद्द्वारा शोधितानि सन्ति ... ०॥० ८-

**तोषणीव्याख्यायुतः**—श्रीमद्भागवतदशमस्कंधः. ... ... ३ ०।≡

**दशकुमारचरितम्**—दण्डीकृतम्, पूर्वपीठिका, उत्तरपीठिका, कवीन्द्रसरस्वतीकृतपदचन्द्रिकाख्या टीका, शिवरामकृता भूषणाख्या टीका, लघुदीपिका टीका, केवलदशकुमारचरिते, पदचन्द्रिकाटीका च ( पूर्वपीठिकायां ) इत्येताभिः सहितम्. ... १॥ ८=

**दशरूपकम्**—श्रीधनंजयविरचितं, धनिककृतया अवलोकटीकया सहितम्. ... ... ... ... ... ... ०॥० ८-

**द्रव्यगुणसंग्रहः**—वैद्यकग्रंथः सव्याख्यः। अस्मिन्सर्वौषधीनां विशिष्टधर्मोपयोगादि यथावद्विवृतमस्ति. ... ... ... ०॥० ८-

**नलचम्पूः**—दमयन्तीकथा–त्रिविक्रमभट्टकृता, चण्डपालकृतया विषमपदप्रकाशाख्यटीकया सहितम्. ... ... १। ०।०

**निर्णयसिन्धुः**—( मूलम् )–परिच्छेदत्रयात्मकः अस्मिन्नार्याणां सनातनो धर्मनिर्णयो यथावद्वर्णितोऽस्ति. ... ... २ ०।०

**नीतिशतकम्**—भर्तृहरिकृतं, महाबलोपाह्वकृष्णशास्त्रिकृतया टीकया सहितम्. ... ... ... ... ... ... ०।० ८॥

**नैषधीयचरितम्**—श्रीहर्षविरचितं, नैषधीयप्रकाशाख्यया नारायणीटीकया सहितम्. ... ... ... ... ... ५ ०।=

**पञ्चतन्त्रकम्**—श्रीविष्णुशर्मसंकलितम् आंग्लभाषाटिप्पणीसहितम्. २॥ ०।०

**पञ्चरत्नगीता**—भगवद्गीता, विष्णुसहस्रनाम, भीष्मस्तवराजः, अनुस्मृतिः, गजेन्द्रमोक्षश्च इत्येतैः प्रकरणैः सहिता, कौशेयवस्त्रबद्धा स्थूलाक्षरा. ... ... ... ... ... ०॥० ८≡

**पञ्चरत्नगीता**—कौशेयवस्त्रबद्धा मध्यमाक्षरा. ... ... ०।≡ ८-

**पञ्चरत्नगीता**—कौशेयवस्त्रबद्धा सूक्ष्माक्षरा. ... ... ... ०।-॥ ८-

**पञ्चरत्नगीता**—पत्रबद्धा मध्यमाक्षरा. ... ... ... ... ०।- ८-

**पार्वतीपरिणयं नाटकम्**—महाकविबाणभट्टप्रणीतम्. ... ०।० ८॥

**पुष्पबाणविलासम्**—( श्रीकालिदासकृतं ) पण्डितवरश्रीवेङ्कटसार्वभौमविरचितया व्याख्यया समेतम्. ... ... ... ८≡ ८-

**प्रबोधचन्द्रोदयं नाटकम्**—श्रीमत्कृष्णमिश्रयतिविरचितं, नाण्डिल्लगोपप्रभुविरचितचन्द्रिकाटीका दीक्षितरामदासविरचिता प्रकाशटीका च इत्येताभ्यां सहितम्. ... ... ०॥= ८=

**प्रश्नोत्तरपयोनिधिः**—बलरामदासमुनिकृतः. ... ... ८≡ ८॥

**प्रसन्नराघवं नाटकम्**—श्रीजयदेवकविविरचितम्. ... ... ०॥० ८-

| | मू० | डा.व्य. |
|---|---|---|
| **प्राकृतमञ्जरी**—श्रीमत्कात्यायनमुनिप्रणीतप्राकृतसूत्रवृत्तिः. ... | ।॰ | ०- |
| **ब्रह्मसूत्रशांकरभाष्यम्**—रत्नप्रभा-भामती-आनन्दगिरीय-(न्यायनिर्णय)व्याख्यात्रयोपेतम् । ... ... ... ... | ८ | ॥= |
| **भगवद्गीता**—इयं लघ्वक्षराकारायामविस्ताराप्यतिमनोहरा कौशेयपट्टबद्धा चिक्कणपत्रैर्नूत्नाभिनवाक्षरैश्च मुद्रिता. ... | ०=॥ | ०- |
| **भगवद्गीता**—कौशेयपट्टवेष्टिता, स्थूलाक्षरा. ... ... ... | ॥॰ | ०-॥ |
| **भगवद्गीता**—कौशेयाच्छादनयुता, मध्यमाक्षरा. ... ... | ।= | ०॥ |
| **भगवद्गीता**—कौशेयाच्छन्ना, सूक्ष्माक्षरा. ... ... ... | ।॰ | ०॥ |
| **भगवद्गीता मूलं**—( स्थूलाक्षरा ) पत्रमात्रा. ... ... | ।= | ०- |
| **भगवद्गीता**—पत्रबद्धा, मध्यमाक्षरा. ... ... ... | ०≡ | ०॥ |
| **भगवद्गीता**—मध्यमाक्षरा ( बुकसाईज ) ... ... ... | ०≡ | ०॥ |
| **भगवद्गीता**—शंकरानन्दीटीकया सहिता. ( बुकसाईज ) ... | २ | ।॰ |
| **भगवद्गीता**—( श्रीधरीव्याख्यासहिता ) इयं व्याख्यातीव सुलभा नातिविस्तृतापि गीतापदपदार्थबोधनेऽत्यन्तं सहायकारिण्यस्तीत्यस्याः सर्वेषां सौलभ्येन लाभार्थमस्माभिर्मुद्रिता । | ।॥॰ | ०= |
| **भगवद्गीता**—सप्तश्लोकात्मिका. ... ... ... ... | ०। | ०॥ |
| **भट्टिकाव्यम्**—भट्टिकृतं, जयमङ्गलकृतया जयमङ्गलाख्यटीकया सहितम् ( द्वितीयावृत्तिः ).... ... ... ... | २॥ | ।॰ |
| **भामिनीविलासः**—पण्डितराजजगन्नाथविरचितः, अच्युतरायमोडककृतया प्रणयप्रकाशाख्यटीकया सहितः. ... ... | १ | ०- |
| **भास्करोदया**—तर्कसंग्रहदीपिका-प्रकाश(नीलकण्ठी)व्याख्या ... | ।॥= | ०= |
| **भोजप्रबन्धः**—श्रीबल्लालविरचितः. ... ... ... ... | ।- | ०- |
| **मध्यसिद्धान्तकौमुदी**—वरदराजप्रणीता, इदं पुस्तकं विपुलटिप्पण्यादिभिरलंकृतं, मध्यकौमुदीगतसूत्राणामकारादिवर्णक्रमकोशसहितं च मुद्रितमस्ति. ... ... ... ... | ।॥॰ | ०= |
| **मनुस्मृतिः**—कुल्लूकभट्टकृतमन्वर्थमुक्तावल्या सहिता मनुस्मृतिस्थपद्यानामकारादिवर्णक्रमकोशसहिता च.... ... ... | १॥ | ०≡॥ |
| **महावाक्यरत्नावलिः**—श्रीमत्परमहंसपरिव्राजकाचार्यरामचन्द्रयतिकृता. अत्रोपनिषत्सारोद्धारः. ... ... ... | ०= | ०॥ |
| **महावीरचरितं नाटकम्**—भवभूतिकृतं, वीरराघवकृतया टीकया सहितम्. ... ... ... ... ... ... | १॥ | ०= |
| **महिम्नस्तोत्रम्**—मधुसूदनी ( शिवविष्ण्वर्थक ) व्याख्यया सहितम्. | ।॰ | ०- |
| **माधवनिदानम्**—श्रीमन्माधवकरविरचितम्, श्रीमद्विजयरक्षितश्रीकण्ठदत्ताभ्यां प्रणीतया मधुकोशाख्यव्याख्यया सहितम्. | १ | ०= |

# SÂRÂVALĪ

BY

**KALYANAVARMAN**

EDITED

BY

V. SUBRAHMANYA S'ASTRI, B. A.

FIRST EDITION.

---

**PRINTED AND PUBLISHED**

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

Bombay:

1907.

*Price one Rupee and four Annas.*

श्रीः ।

# सारावली ।

श्रीमत्कल्याणवर्मविरचिता ।

इयं

वे० सुब्रह्मण्यशास्त्री बि. ए. इत्येतैः

पाठान्तरैः संस्कृता

मुम्बय्यां

तुकाराम जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

संमुद्र्य प्राकाश्यं नीता ।

शाकः १८२९, सन १९०७.

मूल्यं सपादं रूप्यम् ।

# PREFACE.

IT was in the course of my study of **Jatakaparijata** five years ago that I became aware of the existence of the standard work on Astrology called **Saravali.** Vaidyanatha Dikshita, the learned compiler of **Jatakaparijata** expressly states that his astrological production is but an epitome of this great work. For he says:—**संगृह्य सारावलि-मुख्यतन्त्रं करोम्यहं जातकपारिजातम् ॥**

In my attempts to make out the ambiguous portion of certain slokas in **Jatakaparijata,** I had to refer to **Brihat Jataka** and its commentary by Bhattotpala to decide upon the right interpretation of the dubious passages. I found that Bhattotpala who lived in the time of Emperor Jehangir supported his explanations of the passages in Varahamihira's work by largely quoting from **Saravali,** because its authority on astrological points was undisputedly acknowledged in his time. Balabhadra who lived as a Court astrologer of Shah Shuja has embodied nearly one half of **Saravali,** in his work entitled Horaratna; for almost in every page, he says:—**तथा च कल्याणवर्मा** (the author of Saravali). Mallinatha, the celebrated commentator mentions Kalyanavarman and Varahamihira giving quotations from their works **Saravali** and **Brihata Jataka** to explain certain astrological references in the Kavya Sisupalavadha of Magha. These facts made me long for a copy of the eminent work in order to improve my knowledge of Astrology. I wrote to several well-known booksellers, but could not get any copy of the work-Manuscript or printed-from them. At last, it was my good fortune to get a loan of imperfect manuscripts of this work from the Government Oriental Library, Mysore, from Mr. Pandit Krishniengar of the Native College, Madura, from Mr. Narasimha Sastrial of Kankanhalli (Bangalore District) and from the Palace Library of His Highness the Maharaja of Mysore. And I take this opportunity of expressing my deep indebtedness to them all. From these four manuscripts I was able to piece out nearly the whole work. For in the colophon of the Kankanhalli manuscript, the last chapter is numbered

the 56th. So the work must be in 56 chapters. But I could collect from these manuscripts only 54 chapters. The missing two chapters should be sought in some manuscripts yet to be found. From my perusal of the work, I am able to say that they should relate to Nashta Jataka.

The author Kalyanavarman appears to have flourished between the ages of Varahamihira and Bhattotpala. The style of the work is chaste and flowing. The information is certainly more copious and valuable than can be found in any of the current astrological works.

To such of us as believe in the doctrine of metempsychosis, astrology is irresistibly attractive. For, by its aid, we can trace our condition in our past births. It reveals to us the forces that help or retard our progress hereafter and enables us to estimate with some precision the amount of exertion to be put forth to attain the summumbonum of life.

Being but a learner in astrology, I am unable to treat of the subject adequately. If the stray remarks that I have made will create an interest in the work now presented to the public and make it widely read, I would feel amply rewarded for my trouble.

**Chamarajendrapete,**
**Bangalore City.**
*15th February* 1907.

V. SUBRAHMANYA SASTRI.

# सारावलीविषयानुक्रमः


| अध्यायः | विषयः | पृष्ठं. | श्लोकः |
|---|---|---|---|
| १ | शास्त्रावतारः | १ | ६ |
| २ | होराशब्दार्थचिन्ता | २ | ५ |
| ३ | होराराशिभेदः | २ | ४१ |
| ४ | ग्रहयोनिभेदः | ५ | ३९ |
| ५ | मिश्रकाध्यायः | १० | ५२ |
| ६ | कारकाध्यायः | १४ | ६ |
| ७ | कारकाध्यायः | १५ | १५ |
| ८ | आधानाध्यायः | १६ | ६२ |
| ९ | सूतिकाध्यायः | २१ | ५० |
| १० | अरिष्टाध्यायः | २५ | ११७ |
| ११ | चन्द्रारिष्टभङ्गाध्यायः | ३४ | १७ |
| १२ | अरिष्टभङ्गाध्यायः | ३५ | १५ |
| १३ | चन्द्रविधि ( सुनफा, अनफा, दुरुधुरायोगाः) | ३७ | ३३ |
| १४ | वेशिवाश्युभयचरीयोगाः | ४० | १२ |
| १५ | द्विग्रहयोगाः | ४१ | २३ |
| १६ | त्रिग्रहयोगाः | ४३ | ३८ |
| १७ | चतुर्ग्रहयोगाः | ४६ | ३५ |
| १८ | पञ्चग्रहयोगाः | ४८ | २२ |
| १९ | षड्ग्रहयोगाः | ५० | ८ |
| २० | प्रव्रज्याध्यायः | ५१ | ३७ |
| २१ | नाभसयोगाः | ५४ | ५२ |
| २२ | आदित्यचारदृष्टियोगः | ५८ | ६७ |
| २३ | चन्द्रचारदृष्टियोगः | ६३ | ८६ |
| २४ | अंशकदर्शनेचन्द्रचारः | ७१ | २४ |
| २५ | अङ्गारकचारः | ७३ | ६६ |
| २६ | बुधचारः | ७८ | ६६ |
| २७ | गुरुचारः | ८४ | ६६ |
| २८ | शुक्रचारः | ८९ | ६६ |
| २९ | सौरचारः | ९४ | ६६ |
| ३० | भावाध्यायः | १०० | ८७ |
| ३१ | अन्तरयोगाध्यायः | १०७ | ८७ |

| अध्यायः | विषयः | पृष्ठं. | श्लोकः |
|---|---|---|---|
| ३२ | भाग्यचिन्ता ... ... ... ... ... | ११३ | ११२ |
| ३३ | कर्मचिन्ता ... ... ... ... ... | १२१ | ८२ |
| ३४ | लोकयात्रा... ... ... ... ... ... | १२८ | ७८ |
| ३५ | राजयोगाध्यायः ... ... ... ... ... | १३४ | १८६ |
| ३६ | रश्मिचिन्ता ... ... ... ... ... | १५४ | २९ |
| ३७ | पञ्चमहापुरुषयोगाः ... ... ... ... | १५६ | ४४ |
| ३८ | राजयोगभङ्गाध्यायः ... ... ... ... | १६१ | २४ |
| ३९ | आयुर्दायाध्यायः ... ... ... ... ... | १६३ | २५ |
| ४० | मूलदशाफलम् ... ... ... ... ... | १६५ | ७५ |
| ४१ | अन्तर्दशाफलम् ... ... ... ... ... | १७१ | ६० |
| ४२ | दशारिष्टफलम् ... ... ... ... ... | १७६ | ४ |
| ४३ | दशारिष्टभङ्गाध्यायः ... ... ... ... | १७६ | ३ |
| ४४ | उच्चादिचिन्तनम् ... ... ... ... ... | १७७ | ४५ |
| ४५ | स्त्रीजातकफलम् ... ... ... ... ... | १८० | ३२ |
| ४६ | निर्याणफलम् ... ... ... ... ... | १८३ | ४५ |
| ४७ | नष्टजातके लग्नगुणाः ... ... ... ... | १८७ | ४९ |
| ४८ | ,, होरागुणाः ... ... ... ... | १९० | २५ |
| ४९ | ,, द्रेष्काणगुणाः ... ... ... ... | १९३ | ३७ |
| ५० | ,, नववर्गगुणचिन्ता ... ... ... | १९६ | ११० |
| ५१ | नष्टजातकाध्यायः ... ... ... ... | २०४ | २० |
| ५२ | अष्टकवर्गाध्यायः ... ... ... ... | २०६ | १० |
| ५३ | वियोनिजन्माध्यायः ... ... ... ... | २०७ | ५६ |
| ५४ | उपसंहाराध्यायः ... ... ... ... ... | २१२ | १२ |
| | | | २५२९ |

श्रीः ।

# सारावली ।

श्रीमत्कल्याणवर्मसूरिविरचिता ।

## प्रथमोऽध्यायः ।

श्रीगणेशाय नमः ।

यस्योदये जगदिदं प्रतिबोधमेति
मध्यस्थिते प्रसरति प्रकृतिक्रियासु ।
अस्तं गते स्वपिति चोच्छ्वसितैकमार्तं[1]
भावत्रये[2] स जयति प्रकटप्रभावः ॥ १ ॥

विस्तरकृतानि मुनिभिः परिहृत्य[3] पुरातनानि शास्त्राणि ।
होरातन्त्रं रचितं वराहमिहिरेण संक्षेपात् ॥ २ ॥

राशिदशवर्गभूपतियोगायुर्दायतो दशादीनाम्[4] ।
विषयविभागं स्पष्टं कर्तुं न तु शक्यते यतस्तेन ॥ ३ ॥

अत एव विस्तरेभ्यो यवननरेन्द्रादिरचितशास्त्रेभ्यः ।
सकलमसारं त्यक्त्वा तेभ्यः[5] सारं समुद्ध्रियते ॥ ४ ॥

देवग्रामपुरप्रपोषणबलाद्ब्रह्माण्डसत्पञ्जरे
कीर्तिर्हंसविलासिनीव सहसा यस्येह भात्यातता ।
श्रीमद्व्याघ्रपदीश्वरो रचयति स्पष्टां स सारावलीं
होराशास्त्रविनिर्मलीकृतमनाः कल्याणवर्मा कृती ॥ ५ ॥

होरातृष्णार्तानां शिष्याणां स्फुटतरार्थशिशिरजला ।
कल्याणवर्मशैलान्नदीव सारावली प्रसृता ॥ ६ ॥

इति कल्याणवर्मविरचितायां सारावल्यां शास्त्रावतारो
नाम प्रथमोऽध्यायः ॥

---

१ मात्रं. २ भानुः स एष जयति. ३ परिगृह्य. ४ गोचरदशानाम्. ५ वक्ष्ये सारं समुद्धृत्य.

## द्वितीयोऽध्यायः ।

विधात्रा लिखिता यासौ ललाटेऽक्षरमालिका ।
दैवज्ञस्तां पठेद्व्यक्तं होरानिर्मलचक्षुषा ॥ १ ॥
आद्यन्तवर्णलोपाद्धोराशास्त्रं भवत्यहोरात्रम्[1] ।
तत्प्रतिबद्धश्चायं ग्रहभगणश्चिन्त्यते यस्मात् ॥ २ ॥
कर्मफललाभहेतुं चतुरा········वर्णयन्त्यन्ये ।
होरेति शास्त्रसंज्ञा लग्नस्य तथार्धराशेश्च ॥ ३ ॥
जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा ।
अथवा दैवविमर्शनपर्यायः खल्वयं शब्दः ॥ ४ ॥
अर्थार्जने सहायः पुरुषाणामापदर्णवे पोतः ।
यात्रासमये मन्त्री जातकमपहाय नास्त्यपरः ॥ ५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां होराशब्दार्थ-
चिन्ता नाम द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

तमसावृते समन्ताज्जलभूते भूतले ततोऽकस्मात् ।
उदितो भगवान् भानुः प्रकाशयन् स्वप्रकाशेन ॥ १ ॥
व्यसृजज्जगत्समस्तं ग्रहर्क्षसंघातकल्पितावयवम्[2] ।
द्वादशभेदैश्चित्रः[3] कालः संप्रस्तुतस्तस्मात् ॥ २ ॥
मेषवृषमिथुनकर्कटसिंहाः कन्या तुलाऽथ वृश्चिककः ।
धन्वी मकरः कुम्भो मीनाविति राशिनामानि ॥ ३ ॥
कुम्भः कुम्भधरो नरोऽथ मिथुनं वीणागदाभृन्नरो
मीनौ मीनयुगं धनुश्च सधनुः पश्चाच्छरीरो हयः ।
एणास्यो मकरः प्रदीपसहिता कन्या च नौसंस्थिता
शेषो राशिगणः स्वनामसदृशो धत्ते तुलाभृत्तुलाम् ॥ ४ ॥
शीर्षास्यबाहुहृदयं जठरं कटिबस्तिमेहनोरुयुगम्[4] ।
जानू[5] जङ्घे चरणौ कालस्याङ्गानि राशयोऽजाद्याः ॥ ५ ॥

---

१ त्यहोरात्रात्. २ वयवम्. ३ ग्रहभवनाद्यैः; ग्रहदशभेदैः. ४ लयश्चैव.
५ जानुक.

कालनरस्यावयवान्पुरुषाणां कल्पयेत्प्रसवकाले ।
सदसद्ग्रहसंयोगात्पुष्टान् सोपद्रवांश्चापि ॥ ६ ॥
मेषादीनां क्रियतावुरुजुतुमकुलीरलेयपाथोनाः ।
संज्ञास्तु जूककौर्पिकतौक्षाकोकेरहृदयरोगान्त्याः ॥ ७ ॥
ऋक्षं भवननामानि राशिः क्षेत्रं भमेव वा ।
उक्तानि पूर्वमुनिभिस्तुल्यार्थप्रतिपत्तये ॥ ८ ॥
द्वादशमण्डलभगणं[1] तस्यार्धे सिंहतो रविर्नाथः ।
कर्कटकात्प्रतिलोमं शशी तथान्येऽपि तत्स्थानात् ॥ ९ ॥
भानोरर्धे विहगैः शूरास्तेजस्विनश्च साहसिकाः ।
शशिनो मृदवः सौम्याः सौभाग्ययुताः प्रजायन्ते ॥ १० ॥
कुजभृगुबुधेन्दुरविशशिसुतसितरुधिरार्यमन्दशनिजीवाः ।
गृहपा नवभागानामजमृगतुलकर्कटाश्चाद्याः ॥ ११ ॥
भवनाधिपैः समस्तं जातकविहितं विचिन्तयेन्मतिमान् ।
एभिर्विना न शक्यं पदमपि गन्तुं महाशास्त्रे ॥ १२ ॥
वर्गोत्तमा नवांशास्तथादिमध्यान्तगाश्चराद्येषु ।
सूतौ कुलमुख्यकरा द्वादश भागाः स्वराश्याद्याः ॥ १३ ॥
स्वर्क्षसुतनवमभेशाद्रेक्काणानां क्रमाच्च होराणाम् ।
रविचन्द्राविन्दुरवी विषमसमेष्वर्धराशीनाम् ॥ १४ ॥
शरपञ्चाष्टमुनीन्द्रियभागास्त्रिंशांशकास्तु विषमेषु ।
युग्मेषूत्क्रमगण्याः कुजार्किजीवज्ञशुक्राणाम् ॥ १५ ॥
मेषालिमिथुनमृगहरिमीनतुलावृषभचापधरकर्की ।
घटधरकन्यापूर्वाः सप्तांशानां भवन्तीशाः ॥ १६ ॥
षष्टिर्होरात्रिंशच्चूडपदानां द्विसप्ततिसमेताः ।
लिप्तानामष्टादशशतानि परिवर्तनैः स्वगृहात् ॥ १७ ॥
लग्नादीनां लिप्ता ज्ञेयाः स्वगृहादिवर्गसंगुणिताः ।
अष्टादशशतभक्ताल्लब्धः स्यादीप्सितो वर्गः ॥ १८ ॥
एतेषां गुणदोषान् विस्तरतो नष्टजातके वक्ष्ये ।
एभिः स्पष्टतरं तत्प्रत्यक्षपरीक्षणं यस्मात् ॥ १९ ॥

---

[1] भगणः.

अजादितः क्रूरशुभौ पुमांस्त्री चरः स्थिरो मिश्रतनुश्च दृष्टाः ।
कुलीरमीनालिगृहान्तसन्धिं वदन्ति गण्डान्तमिति प्रसिद्धम्२०

जातो न जीवति नरो मातुरपथ्यो भवेत्स्वकुलहन्ता ।
यदि जीवति गण्डान्ते बहुगजतुरगो भवेद्भूपः ॥ २१ ॥

ऐन्द्राद्यं परिवर्तैस्त्रितयं त्रितयं त्रिभिस्तु मेषाद्यैः ।
एभिर्दिक्षु निबद्धैर्यात्रादि विकल्पयेत्कार्यं[1] ॥ २२ ॥

नरपशुवृश्चिकजलजा यथाक्रमं प्राग्दिगादिगा बलिनः ।
निशि दिवसे सन्ध्यायां पशवः पुरुषो मृगालिकर्किझषाः॥२३॥

नक्तंबला मिथुनकर्किमृगाजगोश्वा
द्युःश्रेष्ठका हरितुलालिघटान्त्यकन्याः ।
पृष्ठोदयाः समिथुना मिथुनं विहाय
शेषाः शिरोभिरुदयन्त्युभयेन मीनः ॥ २४ ॥

आत्मीयनाथदृष्टः सहितस्तेनैव तत्प्रियैर्वापि ।
शशिसुतजीवाभ्यामपि राशिर्बलवान्नचेच्छेषैः ॥ २५ ॥

तन्वर्थसहजबान्धवपुत्रारिस्त्रीविनाशपुण्यानि ।
कर्मायव्ययभावा लग्नाद्या भावतश्चिन्त्याः ॥ २६ ॥

शक्तिधनपौरुषगृहप्रतिभाव्रणकामदेहविवराणि[2] ।
गुरुमानभवव्ययमिति कथितान्यपराणि नामानि ॥ २७ ॥

संज्ञा वेश्माष्टमयोश्चतुरश्रं वै तपश्च नवमस्य ।
होरास्तदशजलानां चतुष्टयं कण्टकं केन्द्रम् ॥ २८ ॥

नामानि चतुर्थस्य तु सुखजलपातालबन्धुहिबुकानि ।
कर्माज्ञामेषूरणगगनाख्यं कीर्त्यते दशमम् ॥ २९ ॥

धर्मसुतयोस्त्रिकोणं सुतस्य धीस्त्रित्रिकोणमिति[3] तपसः ।
द्यूनं जायास्तमयं जामित्रं सप्तमस्याख्या ॥ ३० ॥

षट्कोणं रिपुभवनं तृतीयमथ कीर्तयन्ति दुश्चिक्यम् ।
रिःफं द्वादशभवनं द्वितीयसंज्ञं कुटुम्बं च ॥ ३१ ॥

---

१ त्कार्यम्. २ कल्पस्वविक्रम. ३ मथ.

केन्द्रात्परं पणफरमापोक्लिमसंज्ञितं तयोः परतः ।
बाल्युवस्थविरत्वे क्रमेण फलदा ग्रहास्तेषु ॥ ३२ ॥
षट्दशभवदुश्चिक्यान्युपचयसंज्ञानि कीर्त्यन्ते ।
स्वतनुसुखसुतास्ततपरिछिद्रव्ययसंज्ञितानि चान्यानि ॥ ३३ ॥
सिंहवृषमेषकन्या कार्मुकभृत्तौलिकुम्भधराः ।
सूर्यादीनामेते त्रिकोणभवनानि कथ्यन्ते ॥ ३४ ॥
सूर्यादीनामुच्चाः क्रियवृषमृगयुवतिकर्किमीनतुलाः ।
स्वोच्चगृहकथितभागा यथाक्रमेणैव परमोच्चाः ॥ ३५ ॥
दिग्वन्ह्यष्टाविंशतितिथिबाणत्रिघनविंशतयः ।
स्वोच्चात्सप्तमराशिर्नीचः स्यादंशकात्परमम् ॥ ३६ ॥
ह्रस्वास्तिमिगोजघटा मिथुनधनुःकर्किमृगमुखाश्च समाः ।
वृश्चिककन्यामृगपतिवणिजो दीर्घाः समाख्याताः ॥ ३७॥
एभिर्लग्नाधिगतैः शीर्षप्रभृतीनि वै शरीराणि ।
सदृशानि विजायन्ते युतगगनचरैश्च तुल्यानि ॥ ३८ ॥
भवनाधिपदिङ्नाम प्लव इति यवनैः प्रयत्नतः कथितः ।
तत्प्लवगो विनिहन्यादचिरेण महीपतिः शत्रून् ॥ ३९ ॥
लोहितसितशुकहरिताः पाटलपरिधूम्रपाण्डुचित्राश्च ।
कृष्णकनकाभपिङ्गाः कर्बुरबभ्रूत्वजादिवर्णाः स्युः ॥ ४० ॥
जन्मोदयगृहवर्णा तदधिपतेः पूजिता प्रतिमा ।
हन्ति हरेरिह शत्रूनिन्द्रध्वजिनीव देवरिपून् ॥ ४१ ॥

इति कल्याणवर्मविरचितायां सारावल्यां होराराशिभेदो नाम तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ।

आत्मा रविः शीतकरस्तु चेतः सत्वं धराजः शशिजोऽथ वाणी ।
ज्ञानं सुखं देवगुरुर्मदश्च शुक्रः शनिः कालनरस्य दुःखम् ॥१॥
आत्मादयो गगनगैर्बलिभिर्बलवत्तराः ।
दुर्बलैर्दुर्बलास्ते तु विपरीतं शनेः फलम् ॥ २ ॥

१ स्मृतम्.

यथायथा लग्नगृहाश्रयाणां समुद्गमो भूरिविकल्पनानाम् ।
तथातथा शैलनवाष्टसंख्याः क्रमेण कालावयवाः प्रसूताः ॥ ३ ॥

लग्नात्तक्षणमुदितं [1]वामाङ्गमथाबलम् ।
सव्यार्द्धादितरै[2]स्तस्य नोद्गतं [3]सबलं च तत् ॥ ४ ॥

मूर्धालोचनकर्ण[4]गन्धवहनं गण्डौ हनुश्चाननं
ग्रीवास्कन्धभुजं तु पार्श्वहृदयक्रोडाश्च नाभिः पुनः ।
वस्तिर्लिङ्गगुदे च मुष्कयुगलं चोरुद्वयं जानुनी
जङ्घे पादयुगं विलग्नभवनात्पार्श्वद्वये कल्पिताः ॥ ५ ॥

पापा व्रणं लाञ्छनमे[5]षु सौम्याः स्वांशे स्वराशावथवा स्थितेषु ।
कुर्वन्ति जन्मोत्थितमेषु चिह्नमे[6]षु ग्रहास्तद्विपरीतसंस्थाः ॥ ६ ॥

राजा रविः शशधरस्[7]तु बुधः कुमारः
सेनापतिः क्षितिसुतः सचिवौ सितेज्यौ ।
भृत्यस्तयोश्च रविजः सबला नराणां
कुर्वन्ति जन्मसमये निजमेव [8]सत्वम् ॥ ७ ॥

भानुः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी ।
सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः ॥ ८ ॥

गुरुबुधशुक्राः सौम्याः सौरिकुजार्कास्तु नि[9]गदिताः पापाः ।
शशिजोऽशुभसंयुक्तः क्षीणश्च निशाकरः पापः ॥ ९ ॥

हेलिर्भानुः शशी चन्द्रः क्रू[10]राक्षः क्षितिनन्दनः ।
आरो रक्तस्तथा वक्रो हेम्नो विद् ज्ञोऽथ बोधनः ॥ १० ॥

ईड्येज्यावङ्गिरा जीव आस्फुजिच्च सितो भृगुः ।
मन्दः कोणो यमः कृष्णो विद्यादन्यानि लोकतः ॥ ११ ॥

ताम्रसितारुणहरितकपीतविचित्रासिता इनादीनाम् ।
पावकजलगुहकेशवशक्रशचीवेधसः पतयः ॥ १२ ॥

अर्कादिग्रहदैवतमन्त्रैः सम्पूज्य तामाशाम् ।
कनकगजवाहनादीन्प्राप्नोति गतोऽरितः शीघ्रम् ॥ १३ ॥

---

१ ममङ्गम. २ रंतस्य. ३ सकलं. ४ गण्ड. ५ मेव. ६ मेष्य. ७ रश्च. ८ रूपम्. ९ निसर्गतः. १० क्रूरदृक्.

स्त्रीणां चन्द्रसितौ नपुंसकपती सोमात्मजार्कात्मजौ
पुंसां जीवदिवाकरक्षितिसुता विप्रस्य शक्रोऽङ्गिराः ।
राज्ञां सूर्यकुजौ विशां शशधरो मिश्रस्य मन्दो बुधः
शूद्राणां शिखिभूखतोयमरुतां भौमादयः कीर्तिताः ॥१४॥

कटुलवणतिक्तमिश्रितमधुराम्लकषायरसविशेषाणाम् ।
सुरगृहकाग्निविहारार्थशयनपांसूत्कराणां च ॥ १५ ॥

वस्त्राणां स्थूलाहतशिखिजलहतमध्यदृढसुजीर्णानाम् ।
ताम्रमणिहेममिश्रितरूप्यकमुक्तायसां वाऽपि ॥ १६ ॥

अयनक्षणदिवसर्तुकमासतदर्धशरदां दिनेशाद्याः ।
शिशिरादीनामीशाः शनिसितभौमेन्दुबुधजीवाः ॥ १७ ॥

लग्नाधिपतेस्तुल्यः कालो लग्नोदितांशकसमाख्यः ।
वक्तव्यो रिपुविजयो गर्भेषु च कार्यसंयोगे ॥ १८ ॥

ऋग्वेदाधिपतिर्जीवो यजुर्वेदपतिः सितः ।
सामवेदाधिपो वक्रः शशिजोऽथर्ववेदराट् ॥ १९ ॥

सुरपूज्यः शशिशुक्रौ दिनकरभौमौ बुधार्कजौ नाथाः ।
विबुधमनुष्यपितृणां तिर्यङ्नरकाधिवासानाम् ॥ २० ॥

स्वल्पाकुञ्चितमूर्धजः पटुमतिर्मुख्यस्वरूपस्वनो
नात्युच्चो मधुपिङ्गचारुनयनः शूरः प्रचण्डः स्थिरः ।
रक्तश्यामतनुर्विगूढचरणः पित्तास्थिसारो महान्
गम्भीरश्चतुरश्रकः पृथुकरः कौसुम्भवासा रविः ॥ २१ ॥

सौम्यः कान्तविलोचनो मधुरवाग्गौरः कृशाङ्गो युवा
प्रांशुः सूक्ष्मनिकुञ्चितासितकचः प्राज्ञो मृदुः सात्विकः ।
चारुर्वातकफात्मकः प्रियसखो रक्तैकसारो घृणी
वृद्धस्त्रीषु रतश्चलोऽतिसुभगः शुभ्राम्बरश्चन्द्रमाः ॥ २२ ॥

ह्रस्वः पिङ्गललोचनो दृढवपुर्दीप्ताग्निकान्तिश्चलो
मज्जावानरुणाम्बरः पटुतरः शूरश्च निष्पन्नवाक् ।

१ चन्द्रसुत.

ह्रस्वाकुञ्चितकेशदीप्ततरुणः[1] पित्तात्मकस्तामस-
श्चण्डः साहसिको विघातकुशलः संरक्तगौरः कुजः ॥ २३ ॥
रक्तान्तायतलोचनो मधुरवाक् दूर्वादलश्यामल-
स्त्वक्सारोऽतिरजोधिकः स्फुटवचाः स्फीतस्त्रिदोषात्मकः ।
हृष्टो मध्यमरूपवान् सुनिपुणो वृत्तः शिराभिस्ततः
सर्वस्यानुकरोति वेषवचनैः पालाशवासा बुधः ॥ २४ ॥
ईषत्पिङ्गललोचनश्रुतिधरः सिंहाच्छनादः स्थिरः
सत्वाढ्यः सुविशुद्धकाञ्चनवपुः पीनोन्नतोरस्थलः ।
ह्रस्वो धर्मरतो विनीतनिपुणो बद्धोत्कटाक्षः क्षमी
स्यात्पीताम्बरधृक्[2] कफात्मकतनुर्मेदःप्रधानो गुरुः ॥ २५ ॥
चारुर्दीर्घभुजः पृथूरुवदनः शुक्लालिकः कान्तिमान्
कृष्णाकुञ्चितसूक्ष्मलम्बिचिकुरो[3] दूर्वादलश्यामलः[4] ।
कामी वातकफात्मकोऽतिसुभगश्चित्राम्बरो[5] राजसो
लीलावान्मतिमान्विशालनयनः स्थूलांसदेशः[6] सितः ॥२६॥
पिङ्गो निम्नविलोचनः कृशतनुर्दीर्घः सिरालोऽलसः
कृष्णाङ्गः पवनात्मकोऽतिपिशुनः स्नाय्वाततो निर्घृणः ।
मूर्खः स्थूलनखद्विजोऽतिमलिनो रूक्षोऽशुचिस्तामसो
रौद्रः क्रोधपरो जरापरिणतः कृष्णाम्बरो भास्करिः ॥२७ ॥
मित्राणि सूर्याद्गुरुभौमचन्द्राः सूर्येन्दुपुत्रौ रविचन्द्रजीवाः ।
भानुश्च शुक्रः शशिसूर्यभौमा मन्देन्दुजौ शुक्रबुधौ क्रमेण॥२८॥
शुक्रार्कजौ चन्द्रमसो न कश्चित्सौम्यः शशी शुक्रबुधौ रवीन्दू ।
सोमार्कवक्रा रवितस्त्वमित्रा मित्रारिशेषो न सुहृन्न शत्रुः ॥२९॥
व्ययाम्बुधनखायेषु तृतीये सुहृदः स्थिताः ।
तत्कालरिपवः षष्ठसप्ताष्टैकत्रिकोणगाः ॥ ३० ॥
हितसमरिपुसंज्ञा ये निसर्गान्निरुक्ता
हिततमहितमध्यास्तेऽपि तत्कालमित्रैः ।

---

१ हिंस्रः. २ मृत्क. ३ लम्बितकचो. ४ दूर्वाङ्कुरश्यामलः. ५ धिको. ६ लात्मदेहः.

रिपुसमसुहृदाख्याः सूतिकाले ग्रहेन्द्रा
अतिरिपुरिपुमध्याः शत्रुभिश्चिन्तनीयाः ॥ ३१ ॥
संपश्यन्ति[1] स्थानात् सदा ग्रहाश्चरणवृद्धितः सर्वे ।
त्रिदशत्रिकोणचतुरश्रसप्तमानां फलं क्रमेणैव ॥ ३२ ॥
पूर्णं पश्यति रविजस्तृतीयदशमं त्रिकोणमपि जीवः ।
चतुरस्रं भूमिसुतो द्यूनं च सितार्कशशिबुधाः क्रमशः ॥ ३३ ॥
दिक्स्थानकालचेष्टाकृतं बलं सर्वनिर्णयविधाने ।
वक्ष्ये चतुष्प्रकारं ग्रहस्तु रिक्तो भवेदबलः ॥ ३४ ॥
लग्ने जीवबुधौ दिवाकरकुजौ व्योम्नि स्मरे भास्करि-
र्बन्धाविन्दुसितौ दिशाकृतमिदं स्वोच्चे स्वकोणे स्वभे ।
मित्रस्वांशकसंस्थितः शुभफलैर्दृष्टो बलीयान् ग्रहः
स्त्रीक्षेत्रे शशिभार्गवौ नरगृहे शेषा बले स्थानजे ॥ ३५ ॥
जीवार्कास्फुजितोऽह्नि विच्च सततं मन्देन्दुभौमा निशि
होरामासदिनाब्दपाश्च बलिनः सौम्याः सितेऽन्येऽसिते ।
सङ्ग्रामे जयिनो विलोमगतयः संपूर्णगावो ग्रहाः
सूर्येन्दू पुनरुत्तरेण बलिनौ सत्योक्तचेष्टाबले ॥ ३६ ॥
उत्तरमयनं प्राप्ताः शुक्रकुजार्केन्द्रमन्त्रिणो बलिनः ।
याम्यं शशिरविपुत्रौ द्वयेऽपि शशिजः स्ववर्गस्थः ॥ ३७ ॥
स्त्रीपुंनपुंसकाख्याः[2] क्षेत्रेष्वाद्यन्तमध्यसंप्राप्ताः ।
सूर्यान्निर्गत्य सदा नवोदिता यवनराजमतम् ॥ ३८ ॥
प्राग्रात्रिभागेऽतिबलः शशाङ्कः शुक्रो निशार्धेऽवनिजो निशान्ते ।
प्रातर्बुधो मध्यदिने च सूर्यः सर्वत्र जीवोऽर्कसुतो दिनान्ते ॥ ३९ ॥
कृष्णारबुधगुरुसिताः शशिसूर्यावुत्तरोत्तरं बलिनः ।
साधारण[3]बलमेतद्बलसाम्ये चिन्तयेत्प्राज्ञः ॥ ४० ॥

इति कल्याणवर्मविरचितायां सारावल्यां ग्रहयोनिभेदो
नाम चतुर्थोऽध्यायः ॥

१ सर्व्यं संपश्यन्ति. २ पुंस्त्री. ३ स्वाभाविक.

## पञ्चमोऽध्यायः ।

राशिप्रभेदसंज्ञः कथितो ग्रहयोनिभित्तिरध्यायः ।
सर्वव्यापकमधुना कथयिष्ये मिश्रकं नाम ॥ १ ॥

दीप्तः स्वस्थो मुदितः शान्तःशक्तो निपीडितो[1] भीतः ।
विकलः खलश्च कथितो नवप्रकारो ग्रहो हरिणा ॥ २ ॥

स्वोच्चे भवति च दीप्तः स्वस्थः स्वगृहे सुहृद्गृहे मुदितः ।
शान्तः शुभवर्गस्थः शक्तः स्फुटकिरणजालश्च ॥ ३ ॥

विकलो रविलुप्तकरो ग्रहाभिभूतो[2] निपीडितश्चैवम् ।
पापगणस्थश्च खलो नीचे भीतः समाख्यातः ॥ ४ ॥

दीप्ते विचरति पुरुषः प्रतापविषमाग्निदग्धरिपुवर्गः[3][4] ।
लक्ष्म्यालिङ्गितदेहो गजमदसंसिक्तभूपृष्ठः ॥ ५ ॥

स्वस्थः करोति जन्मनि रत्नानि सुखानि कनकपरिवारान् ।
नृपतेर्दण्डपतित्वं गृहधान्यकुटुम्बपरिवृद्धिम् ॥ ६ ॥

मुदिते विलसति मुदितो विलासिनीकनकरत्नपरिपूर्णः ।
विजितसकलारिपक्षः समस्तसुखभाङ् नरो भवति ॥ ७ ॥

शान्ते प्रशान्तचित्तः सुखधनभागी महीपतेः सचिवः ।
विद्वान् परोपकारी धर्मपरो जायते पुरुषः[5] ॥ ८ ॥

स्त्रीवस्त्रमाल्यगन्धैर्विलसति पुरुषः सदा विततकीर्तिः ।
दयितः सर्वजनस्य च शक्ताख्ये भवति विख्यातः ॥ ९ ॥

दुःखैर्व्याधिभिररिभिः प्रपीड्यते[6] पीडिताख्ये तु ।
देशाद्देशं विचरति बन्धुवियोगाभिसंतप्तः ॥ १० ॥

बहुसाधनोऽपि राजा प्रध्वस्तबलः प्रपीडितो रिपुणा ।
नाशमुपयाति विजितो भीते दैन्यं परं प्राप्तः ॥ ११ ॥

स्वस्थानपरिभ्रष्टः क्लिष्टो मलिनः प्रयाति परदेशम् ।
विध्वस्तबलो[7] विकले रिपुबलसंचकितचित्तश्च ॥ १२ ॥

---

१ तिपीडितो. २ तः प्रपी. ३ निचयः. ४ जनः ख्यातः. ५ सुभगः. ६ पीडिते सदा पुरुषः. ७ धनो.

स्त्रीभरणदुःखततः समस्तधननाशकलुषितमनस्कः ।
न जहाति शोकभारं कथमपि खलसंज्ञिते पुरुषः ॥ १३ ॥
उच्चराशौ विलोमे च बेलं नान्यैरिहेष्यते ।
कालस्यातिबहुत्वाच्च तस्मात्स्वोच्चेऽतिवक्रिते ॥ १४ ॥
स्वोच्चाश्रिताः श्रेष्ठबला भवन्ति मूलत्रिकोणे स्वगृहे च मध्याः ।
इष्टेक्षिता मित्रगृहाश्रिता वा वीर्यं कनीयः समुपोद्वहन्ति ॥१५॥
शुक्लप्रतिपद्दशके मध्यबलः कीर्त्यते यवनवृद्धैः ।
श्रेष्ठो द्वितीयदशके स्वल्पबलश्चन्द्रमास्तृतीये च ॥ १६ ॥
आहितकलासमूहः प्रसन्ननिजमण्डलः सुपरिपूर्णः ।
अप्रतिहतमिह कुरुते भूतिबलमुडुगणाधिपतिः ॥ १७ ॥
चन्द्राध्यासितराशेर्नाथो लग्नाधिपोऽपि वा यस्य ।
केन्द्रे सुरगुरुमन्त्री वयसो मध्ये सुखं तस्य ॥ १८ ॥
राशेस्तदीश्वरस्य च बलेन परिकल्प्यमृक्षभेदफलम् ।
युगपत्फलोपलब्धेरवधृतिरेकस्य कर्तव्या ॥ १९ ॥
होराग्रहबलसाम्ये निसर्गजं चिन्तनीयमाचार्यैः ।
लग्नाधिपतेस्तुल्यं बलमिह चूडामणिर्वदति ॥ २० ॥
उच्चबलं कन्यायां बुधस्य तुङ्गांशकैः सदा चिन्त्यम् ।
परतस्त्रिकोणजातं पञ्चभिरंशैः स्वराशिजं परतः ॥ २१ ॥
उच्चं भागत्रितयं वृष इन्दोश्च त्रिकोणमपरेंऽशाः ।
द्वादशभागा मेषे त्रिकोणमपरे स्वभं तु भौमस्य ॥ २२ ॥
दशभागा ईड्यस्य च त्रिकोणमपरे स्वभं चापे ।
शुक्रस्य तु त्रिकोणं पञ्चभिरपरे स्वभं जूके ॥ २३ ॥
विंशतिरंशाः सिंहे त्रिकोणमपरे स्वभवनमर्कस्य ।
कुम्भे त्रिकोणनिजभे रविजस्य यथा रवेः सिंहे ॥ २४ ॥

स्वोच्चस्थितः शुभफलं प्रकरोति पूर्णं
नीचर्क्षगस्तु विफलं रिपुमन्दिरेऽल्पम् ।

१ हरण. २ फलं. ३ हैरिष्यते. ४ थवा. ५ सुरमन्त्री वा. ६ पेन तु.

पादं शुभस्य हितभे स्वगृहे हितार्धं
पादत्रयं गगनगः स्थितवांस्त्रिकोणे ॥ २५ ॥
नीचर्क्षगः सकलमेव करोति पापं
न्यूनं च किंचिदरिभे विफलं स्वतुङ्गे ।
पादत्रयं हितगृहे विहगोऽशुभस्य
स्वर्क्षे दलं च चरणं स्थितवांस्त्रिकोणे ॥ २६ ॥
औत्पातिकाः सवितृलुप्तकरा विरूक्षा
नीचं गता रिपुगृहं च नभश्चरेन्द्राः ।
युद्धे जिताः शुभफलानि विनाशयन्ति
पापानि यानि सुतरां परिवर्धयन्ति ॥ २७ ॥
उच्चबलेन समेतः परां विभूतिं ग्रहः प्रसाधयति ।
पुंसामथ साचिव्यं त्रिकोणबलवान् बलपतित्वम् ॥ २८ ॥
स्वर्क्षबलेन च सहितः प्रमुदितधनधान्यसंपदाक्रान्तम् ।
मित्रबलेन च युक्तो जनयति कीर्त्यान्वितं पुरुषम् ॥ २९ ॥
तेजस्विनमतिसुभगं सुस्थिरविभवं नृपाच्च लब्धधनम् ।
निजहोराबलयुक्तो जनयति विक्रान्तमतिचिन्त्यम् ॥ ३० ॥
स्वद्रेक्काणबलेनाहीनो गुणभाजनं ग्रहः कुरुते ।
स्वनवांशकबलयुक्तः करोति पुरुषं प्रसिद्धं च ॥ ३१ ॥
सप्तांशकबलसहितः साहसिकं वित्तकीर्त्याढ्यम् ।
द्विरसांशबलसमेतः कर्मरतपरोपकारकं चैव ॥ ३२ ॥
त्रिंशांशबलेन तथा विकसत्सौख्यं गुणान्वितं कुर्यात् ।
शुभदर्शनफलसहितः पुरुषं कुर्याद्धनान्वितं ख्यातम् ।
सुभगं प्रधानमखिलं सुरूपदेहं सुसौख्यं च ॥ ३३ ॥
पुंस्त्रीभवनबलेन च करोति जनपूजितं कलाकुशलम् ।
पुरुषं प्रसन्नचित्तं कल्यं परलोकभीरुं च ॥ ३४ ॥
स्थानबलेन समेतः स्थितिसौख्यं सुहृच्च भागाढ्यः ।
धीरो निश्चलचित्तः स्वतन्त्रकर्मा भवेन्मनुजः ॥ ३५ ॥

१ बल. २ ममलं.

आशाबलसमुपेतो नयति स्वदिशं नभश्चरः पुरुषम् ।
नीत्वा वस्त्रविभूषणवाहनसौख्यान्वितं कुरुते ॥ ३६ ॥
आयनबलसमुपेतो दद्याद्विविधार्थसङ्गमं स्वदिशि ॥ ३७ ॥
क्वचिद्राज्यं क्वचित्पूजां क्वचिद्द्रव्यं क्वचिद्यशः ।
ददाति विहगश्चित्रं चेष्टावीर्यसमन्वितः ॥ ३८ ॥
वक्रिणस्तु महावीर्याः शुभा राज्यप्रदा ग्रहाः ।
पापा व्यसनिनां[1] पुंसां कुर्वन्ति च वृथाटनम्[2] ॥ ३९ ॥
स्वस्थशरीरसमागमसुकरोद्भवजयबलेन विदधाति ।
शुभमखिलं विहगेन्द्रो राज्यं च विनिर्जितारातिम् ॥ ४० ॥
रात्रिदिवाबलपूर्णैर्भृगजलाभेन शौर्यपरिवृद्ध्या ।
मलिनयति शत्रुपक्षं भजति च लक्ष्मीं नभश्चरैः पुरुषः ॥४१॥
द्विगुणा द्विगुणं दद्युर्वर्षाधिपमासदिवसहोरेशाः ।
क्रमपरिवृद्ध्या सौख्यं स्वदशासु धनं च कीर्तिं च ॥ ४२ ॥
पक्षबलाद्रिपुनाशं रत्नाम्बरहस्तिसम्पदं दद्युः ।
स्त्रीकनकभूमिलाभान् कीर्तिं च शशाङ्ककरधवलाम् ॥ ४३ ॥
सकलकर[3]भारभारितनिर्मलकरजालभासुराः सततम् ।
राज्यं ग्रहाः प्रदद्युः सौख्यं च मनोरथातीतम्[4] ॥ ४४ ॥

आचारसत्यशुभशौचयुताः सुरूपा-
स्तेजस्विनः कृतविदो द्विजदेवभक्ताः ।
स्रग्वस्त्रगन्धजलभूषणसंप्रियाश्च
सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति ॥ ४५ ॥

लुब्धाः कुकर्मनिरता निजकार्यनिष्ठाः
साधुद्विषः सकलहाश्च तमोभिभूताः ।
क्रूराः सदा वधरता मलिनाः कृतघ्नाः
पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥ ४६ ॥

स्वमित्रक्षेत्रसंस्थानां ग्रहाणां बालसंज्ञिका ।
स्वत्रिकोणगतानां च कुमारो नामसंज्ञितः ॥ ४७ ॥

---

१ व्यसनदाः. २ पदाटनम्. ३ बलभार. ४ मनोरथादधिकम्.

ग्रहाणां स्वोच्चसंस्थानां युवराज................ ।
शत्रुक्षेत्रगतानां च वृद्धो नाम तथेरितः ॥ ४८ ॥
नीचगानां ग्रहाणां च दशा मरणसंज्ञिता ।
तत्तत्फलसमायुक्ता ग्रहाणां तु दशा भवेत् ॥ ४९ ॥
बालैः[1] सुखी सुशीलश्च[2] यौवनैरवनीश्वरः[3] ।
वृद्धैर्व्याधिर्ऋणे[4] वृद्धिर्मरणे मरणं व्ययम् ॥ ५० ॥
पुंराशिगैः शुभखगैर्धीराः[5] सङ्ग्रामरक्षिणो बलिनः ।
निश्चेष्टैः सुकठोराः क्रूरा मूर्खाश्च जायन्ते ॥ ५१ ॥
युवतिभवनस्थितेषु च मृदवः सङ्ग्रामभीरुकाः पुरुषाः ।
जलकुसुमवस्त्रनिरताः सौम्याः कल्याः स्वजनहृष्टाः[6] ॥ ५२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां मिश्रकाध्यायः पञ्चमः ॥

## षष्ठोऽध्यायः ।

स्वर्क्षत्रिकोणतुङ्गस्था यदि केन्द्रेषु संस्थिताः ।
अन्योन्यं कारकास्ते स्युः केन्द्रेष्वेव हरेर्मतम् ॥ १ ॥
रवितनयो जूकस्थः कुलीरलग्ने वृहस्पतिहिमांशू ।
मेषे कुजो गवि सितः परस्परं कारका एते ॥ २ ॥
तुङ्गसुहृत्स्वगृहांशे स्थिता ग्रहाः कारकाः समाख्याताः ।
मेषूरणे च रविरिति विशेषतो वक्ति चाणक्यः ॥ ३ ॥
लग्नस्थः सुखसंस्थो दशमस्थश्चापि कारकाः सर्वे ।
एकादशेऽपि केचिद्वाञ्छन्ति न तन्मतं मुनीन्द्राणाम् ॥ ४ ॥
नीचकुले संभूतः कारकविहगैः प्रधानतां याति ।
क्षितिपतिवंशसमुत्थो भवति नरेन्द्रो न सन्देहः ॥ ५ ॥
कारकवेधो बलवान् मूलं योगेषु कीर्तितो हरिणा ।
तस्मात्फलनिर्देशः कारकवेधादिभिर्वाच्यः ॥ ६ ॥

इति कल्याणवर्मविरचितायां सारावल्यां कारकाध्यायः षष्ठः ॥

---

१ बाले. २ स्यात्. ३ ने रजनी. ४ वृद्धे. ५ पुंराशिषु ग्रहेन्द्रैः. ६ सदा. ७ रवियुतः ८ भेदादिभिः.

## सप्तमोऽध्यायः ।

रविचन्द्रभौमबुधजीवशुक्रसौरा दिनादिपतयश्च[1] ।
मासे चाश्वयुजादौ दिनेश्वरेऽब्दे दिनपतेश्च ॥ १ ॥
अब्दाधिपाश्चतुर्थाः क्रमेण षष्ठस्तु कालहोरेशाः ।
द्विर्द्वादशहोराः स्युर्दिवसास्त्वेकाधिकास्त्रिंशत् ॥ २ ॥
मासास्त्रिंशद्गुणिता गतैर्दिनैः सप्तभाजिता दिवसाः ।
अब्दाधिपात् प्रगण्या गते दिनाद्यः प्रयत्नस्तु ॥ ३ ॥
एकत्रिंशद्भागैर्युक्तश्चैत्रादीनां ग्रहादीनाम् ।
क्रमशो विज्ञातव्या शुक्लप्रतिपत्प्रसंख्यायाम् ॥ ४ ॥
यस्य ग्रहस्य भावो यस्तस्य गृहे प्रशस्यते कर्म ।
तस्मिंश्चोपचयस्थे तस्मिन् लग्ने ग्रहे चास्य ॥ ५ ॥
तत्कर्मग्रहदिवसे तदेव होराब्दमासकालेषु ।
पादविवृद्ध्या वा स्यात्तेषां कालस्य संपाकः ॥ ६ ॥
सव्यालैर्निकशैल[2]स्वर्णशस्त्रविषदहनभेषजनृपाश्च ।
म्लेच्छाब्धितारकान्तारकाष्ठमंत्रप्रभुः सूर्यः ॥ ७ ॥
कविकुसुमभोज्यमणिरजतशंखलवणोदकेषु वस्त्राणाम् ।
भूषणनारीघृतकुजतैल········निद्राप्रभुश्चन्द्रः ॥ ८ ॥
रक्तोत्पलताम्रसुवर्णरुधिरपारदमनःशिलाद्यानाम् ।
क्षितिनृपतिपतनमूर्च्छापैत्तिकचोरप्रभुर्भौमः ॥ ९ ॥
श्रुतलिखितशिल्पचैत्य(क?)नैपुणमन्त्रित्वदूतहास्यानाम् ।
खगयुग्मख्यातिवनस्पतिस्वर्णमयप्रभुः सौम्यः ॥ १० ॥
माङ्गल्यधर्मपौष्टिकमहत्वशिक्षानियोगपुरराष्ट्रम् ।
यानासनशयनसुवर्णधान्य(वेश्म)पुत्रप्रभुर्जीवः ॥ ११ ॥
वस्त्रमणिरत्नभूषणविवाहगन्धेष्टमाल्ययुवतीनाम् ।
गोमयनिधानविद्याधनशुक्तिरजतप्रभुः शुक्रः ॥ १२ ॥
त्रपुसीसकाललोहककुधान्यमृतबन्धभृतकानाम् ।
नीचस्त्रीपै[3]ण्यकदासवृद्धजै[4]नदीक्षा प्रभुः सौरिः ॥ १३ ॥

१ पतयस्तु. २ शैलोर्ण? ३ पण्ड. ४ जनता?

अर्कः कलिङ्गविषये यवनेषु च चन्द्रमाः ।
शुक्रः समतटे जातः सैन्धवेषु बृहस्पतिः ॥ १४ ॥
मगधेषु बुधो जातः सौराष्ट्रेषु शनैश्चरः ।
अङ्गारकस्तूज्जयिन्यां राहुः केतुश्च द्राविडे ॥ १५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां
कारकाध्यायः सप्तमः ॥

## अष्टमोऽध्यायः ।

राश्यादिफलविभागः कस्य विधेयो विना समुत्पत्तेः[1] ।
आधानमथो[2] वक्ष्ये कारणभूतं समस्तजन्तूनाम् ॥ १ ॥
अनपचयराशिसंस्थे कुमुदाकरबान्धवे रुधिरदृष्टे ।
प्रतिमासं युवतीनां भवतीह रजो ब्रुवन्त्येके ॥ २ ॥
इन्दुर्जलं कुजोऽग्निर्जलमसृगथवाग्निरेव पित्तं स्यात् ।
एवं रक्ते हीने[3] पित्तेन रजः प्रवर्त्तते स्त्रीषु ॥ ३ ॥
एवं यद्भवति रजो गर्भस्य निमित्तमेव कथितं[4] तत् ।
उपचयसंस्थे विपुलं[5] प्रतिमासं दर्शनं तस्य ॥ ४ ॥
उपचयभवने शशभृद्दृष्टो गुरुणा सुहृद्भिरथवासौ ।
पुंसा करोति योगं विशेषतः शुक्रसंदृष्टः ॥ ५ ॥
चन्द्रे कुजेन दृष्टे पुष्पवती सह विटेन संयोगम् ।
राजपुरुषेण रविणा रविजे नाप्नोति भृत्येन ॥ ६ ॥
एकैकेन फलं स्याद्दृष्टो नान्यैः कुजादिभिः पापैः ।
सर्वैः स्वगृहं त्यक्त्वा गच्छति वेश्यापदं युवती ॥ ७ ॥
द्विपदादयो विलग्नात् सुरतं कुर्वन्ति सप्तमे यद्वत् ।
तद्वत् स्त्रीपुरुषाणां गर्भाधाने समादेश्यम् ॥ ८ ॥
अस्तेऽशुभयुतदृष्टे[6] सरोषकलहं भवेद्ग्राम्यम् ।
सौम्यं सौम्यैः सुरतं वात्स्यायनसम्प्रयोगिकाख्यातम् ॥ ९ ॥
तत्र शुभाशुभमिश्रैः कर्मभिरधिवासिता विषयवृत्तिः ।
गर्भावासे निपतति संयोगः शुक्रशोणितयोः ॥ १० ॥

---

१ समुत्पत्तिम्. २ मतो. ३ क्षुभिते. ४ विहितं. ५ विफलं. ६ दृष्टियुते.

उपचयगौ रविशुक्रौ बलिनौ पुंसः समांशसम्प्राप्तौ ।
युवतेर्वा कुजचन्द्रौ यदा तदा गर्भसंभवो भवति ॥ ११ ॥
शुक्रार्कभौमशशिभिः स्वांशोपचयस्थितैः सुरेज्ये वा ।
धर्मोदयात्मजस्थे[1] बलवति गर्भस्य संभवो भवति ॥ १२ ॥
मिथुनस्य मनोभावो यादृक् मदलालसं भवति ।
श्लेष्मादिभिः स्वदोषैस्तत्तुल्यगुणो निषिक्तः स्यात् ॥ १३ ॥
विषमे विषमांशगता होराशशिजीवभास्करा बलिनः ।
कुर्वन्ति जन्म पुंसां समौ[2] समांशे युवतिनरजन्म[3] ॥ १४ ॥
ओजर्क्षे गुरुसूर्यौ बलिनौ पुंसः समे सितेन्दुकुजाः ।
कन्यानां जन्मकरा गर्भाधाने स्थिता बलिनः ॥ १५ ॥
मिथुने चापेऽर्कगुरू बुधदृष्टौ दारकद्वयं कुरुतः ।
स्त्रीयुग्मं कन्यायां सितशशिभौमा झषे च बुधदृष्टाः ॥ १६ ॥
लग्नं मुक्त्वा विषमे शनैश्चरः पुरुषजन्मदो[4] भवति ।
योगे विहगस्य बलं संवीक्ष्य वदेन्नरं स्त्रियं वाऽपि ॥ १७ ॥
अन्योन्यं रविचन्द्रौ विषमर्क्षगतौ निरीक्षेते ।
इन्दुजरविपुत्रौ वा दृष्टौ बलिनौ नपुंसकं कुरुतः ॥ १८ ॥
पश्यति वक्रः समभे सूर्यं चन्द्रोदयौ[5] च विषमर्क्षे ।
यद्येवं गर्भस्थः क्लीबो मुनिभिः समादिष्टः[6] ॥ १९ ॥
ओजसमराशिसंस्थौ ज्ञेन्दू षण्डं कुजेक्षितौ कुरुतः ।
नरभे विषमनवांशे होरेन्दुबुधाः सितार्किदृष्टा वा ॥ २० ॥
लग्ने समराशिगते चन्द्रे च निरीक्षिते बलयुतेन ।
गगनसदा वक्तव्यं मिथुनं गर्भस्थितं नित्यम्[7] ॥ २१ ॥
समराशौ शशिसितयोर्विषमे गुरुवक्रसौम्यलग्नेषु ।
द्विशरीरे वा बलिषु प्रवदेत् स्त्रीपुरुषमत्रैव ॥ २२ ॥
द्विशरीरांशकयुक्तान् ग्रहान् विलग्नं च पश्यतीन्दुसुते ।
मिथुनांशे कन्यैका द्वौ पुरुषौ त्रितयमेवं[8] स्यात् ॥ २३ ॥

---

१ धर्मेऽथवात्मजे वा. २ समे. ३ तु युवतीनाम्. ४ पुत्र. ५ दये. ६ स्तदा दृष्टः. ७ ननूम्. ८ नियत.

द्विशरीरांशकयुक्तान् ग्रहान् विलग्नं च पश्यतीन्दुसुते ।
कन्यांशे द्वे कन्ये पुरुषश्च निषिच्यते गर्भे[1] ॥ २४ ॥
मिथुने[2] धनुरंशगतान् ग्रहान् विलग्नं च पश्यतीन्दुसुतः ।
मिथुनांशस्थश्च यदा पुरुषत्रितयं तदा गर्भे ॥ २५ ॥
कन्यामीनांशस्थान्[3] विहगानुदयं च युवतिभागगतः ।
पश्यति शिशिरगुतनयः कन्यात्रितयं तदा गर्भः[4] ॥ २६ ॥
दिवसे मातापितरौ शुक्ररवी शशिशनी निशायां च ।
मातृभगिनीपितृव्यौ विपर्ययात् कीर्तितौ यवनैः ॥ २७ ॥
लग्नाद्विषमर्क्षगतः पितुः पितृव्यस्य खेचरः शस्तः ।
मातृभगिनीजनन्योः[5] समगृहगोऽन्ये तथा भेषु ॥ २८ ॥
मासेष्वाधानादिषु गर्भस्य यथा क्रमेण जायन्ते ।
सप्तसु कलिलाण्डकशाखास्थित्वग्रोमचेतनताः ॥ २९ ॥
मासेऽष्टमे च तृष्णा क्षुधा च नवमे तथोद्वेगः ।
दशमे त्वर्थं[6] संपूर्णः पक्कमिव फलं पतति गर्भः ॥ ३० ॥
शुक्रारजीवरविशशिसौरिबुधविलग्नपोडुपादित्याः ।
मासपतयः स्युरेतैर्गर्भस्य शुभाशुभं चिन्त्यम् ॥ ३१ ॥
उत्पातक्रूरहते तस्मात् स्वस्याधिपे पतति गर्भः ।
लग्नगृहं वा हेतुर्योगेशो गर्भपतनस्य ॥ ३२ ॥
अथवा निषेककाले विलग्नसंस्थौ यथा[7] रुधिरमन्दौ ।
तद्ग्रहगतेऽथवेन्दौ तदीक्षिते वा पतति गर्भः ॥ ३३ ॥
होरेन्दुयुतैः सौम्यैस्त्रिकोणजायार्थखाम्बुसंस्थैर्वा ।
पापैस्त्रिलाभयातैः सुखी तु गर्भो निरीक्षिते रविणा ॥ ३४ ॥
क्रूरान्तःस्थः सूर्यश्चन्द्रो वा युगपदेव मरणाय ।
सौम्यैरदृष्टमूर्तिर्युवतीनां गर्भसहितानाम् ॥ ३५ ॥
उदयास्तगतैः पापैः सौम्यैरनवेक्षितैश्च मरणं स्यात् ।
उदयस्थितेऽर्कजे वा क्षीणेन्दौ भौमसंदृष्टे ॥ ३६ ॥

---

१ गर्भः. २ नृमिथुनधनु. ३ गतान्. ४ गर्भे. ५ जननीभगिन्योः. ६ तथातिपूर्णः. ७ यदा.

व्ययगेऽर्के शशिनि कृशे पाताले लोहिते सगर्भा स्त्री ।
म्रियते तस्मिन्नथवा शुक्रे पापद्वयान्तःस्थे ॥ ३७ ॥
चन्द्रचतुर्थैः क्रूरैर्विलग्नतो वा विपद्यते गर्भः ।
होराद्यूने क्षितिजे म्रियते गर्भः सह जनन्या ॥ ३८ ॥
हिबुकगते धरणिसुते रिःफगतेऽर्के क्षपाकरे क्षीणे ।
गर्भेण सह म्रियते पापग्रहदर्शनप्राप्ते ॥ ३९ ॥
लग्ने रविसंयुक्ते क्षीणेन्दौ वा कुजेऽथवा म्रियते ।
व्ययधनसंस्थैः पापैस्तथैव सौम्यग्रहादृष्टैः ॥ ४० ॥
जामित्रे रवियुक्ते लग्नगते वा कुजे निषिक्तस्य ।
गर्भस्य भवति मरणं शस्त्रच्छेदैः सह जनन्या ॥ ४१ ॥
बलिभिर्बुधगुरुशुक्रैर्दृष्टेऽर्केण च विवर्धते गर्भः ।
मासाधिपबलतुल्यैस्तैस्तैः संयुज्यते भावैः ॥ ४२ ॥
मासि तृतीये स्त्रीणां दौहृदकं जायतेऽवश्यम् ।
मासाधिपस्वभावैर्विलग्नयोगादिभिश्चान्यत् ॥ ४३ ॥
निषेककाले चरराशिगेऽर्के गर्भप्रसूतिर्दशमे च मासे ।
एकादशे च स्थिरराशिसंस्थे स्याद्वादशे मास्युभयाश्रिते च ॥४४॥
गर्भाधाने चरे राशौ दशमासैः प्रसूयते ।
स्थिरेणैकादशे मासे उभये द्वादशे भवः ॥ ४५ ॥
गर्भप्रसवविधानं तात्कालिकलग्नवर्गतश्चिन्त्यम् ।
आधानाज्जन्मर्क्षं दशमं वाञ्छन्ति केचिदाचार्याः ॥ ४६ ॥
आधानोदयशशिनोः सप्तमभं बादरायणो ब्रूते ।
तस्मान्नैकान्तोऽयं सर्वेषां संमतं वक्ष्ये ॥ ४७ ॥
यस्मिन् द्वादशभागे गर्भाधाने स्थितो निशानाथः ।
तत्तुल्यर्क्षे प्रसवं गर्भस्य समादिशेत्प्राज्ञः ॥ ४८ ॥
लग्ने शनैश्चरांशे शनैश्चरे द्यूनगे यदि निषेकः ।
वर्षत्रयेण सूतिर्द्वादशभिः स्याच्छशिनि चैवम् ॥ ४९ ॥

---

१ च शशिनि कृशे. २ सहगर्भा स्त्री. ३ जामित्रगेऽर्कदृष्टे. ४ हृदको. ५ दशमेऽथ. ६ सवः. ७ लग्नवच्चिन्त्यम्. ८ आधानजन्मऋक्षं, आधाने जन्मर्क्षं.

तात्कालिकदिवसनिशासंज्ञः समुदेति राशिभागो यः ।
यावानुदयस्तावान् वाच्यो दिवसस्य रात्रेर्वा ॥ ५० ॥
मुनिभागे दिवसनिशोर्जन्मनि लग्नं वदेद्युक्त्या ।
उदयगणात् प्रसवः स्याद्दिनपक्षमुहूर्तमाससंज्ञर्क्षात् ॥ ५१ ॥
इत्याधानं प्रथमं प्रसूतिकालं सुनिश्चितं कृत्वा ।
जातकविहितं च[1] विधिं विचिन्तयेत्तत्र गणितज्ञः ॥ ५२ ॥
स्यातां यद्याधाने रविशशिनौ सिंहराशिगौ लग्ने ।
दृष्टौ कुजसौरिभ्यां जात्यन्धः सम्भवति तत्र ॥ ५३ ॥
आग्नेयसौम्यदृष्टौ रविशशिनौ बुद्बुदेक्षणं कुरुतः ।
नयनविनाशोऽपि यथा तथाधुना सम्प्रवक्ष्यामि ॥ ५४ ॥
व्ययभवनगतश्चन्द्रो वामं चक्षुर्विनाशयति हीनः ।
सूर्यस्तथैव चान्यच्छुभदृष्टौ याप्यतां नयतः ॥ ५५ ॥
क्रूरैर्ग्रहसन्धिगतैः शशिनि वृषे भौमसौररविदृष्टे[2] ।
मूकः सौम्यैर्दृष्टे वाचं कालान्तरे वदति ॥ ५६ ॥
क्रूरेषु राशिसन्धिषु शशी न सौम्यैर्निरीक्ष्यते च जडः ।
बुधनवमभागसंस्थौ शशिभौमौ यदि सदन्तः स्यात् ॥ ५७ ॥
सौम्ये त्रिकोणसंस्थे लग्नाच्छेषग्रहैर्बलविहीनैः ।
द्विगुणास्यपादहस्तो योगेऽस्मिन्नाहितो भवति गर्भः ॥ ५८ ॥
वामनको मकरान्त्ये लग्ने रविचन्द्रसौरिभिर्दृष्टे ।
शशिनि विलग्ने कर्किणि कुजार्कदृष्टे[3]ऽथवा[4] कुब्जः ॥ ५९ ॥
मीनोदये च दृष्टे कुजार्किशशिभिः[5] पुमान् भवति पङ्गुः ।
व्यर्था भवन्ति योगाः सौम्यग्रहवीक्षिताः सर्वे ॥ ६० ॥
क्रूरग्रहस्त्रिकोणे त्रिकोणलग्ने शुभेषु बलवत्सु ।
द्विशिरोङ्घ्रिबाहुयुग्मः शेषैरबलैर्भवति गर्भः ॥ ६१ ॥
इत्याधानविधानं प्रसूतिसमयेऽपि योजयेद्योग्यम् ।
आधाने यन्नोक्तं प्रसूतिविहितं तदपि चिन्त्यम् ॥ ६२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां आधानेऽष्टमोऽध्यायः ॥

१ च गतो. २ संदृष्टे. ३ कुजार्कि. ४ तथा. ५ कुजार्कशनिभिः.

# नवमोऽध्यायः ।

आधाने[1] हि मयोक्तं प्रसूतिकालस्य निर्णयार्थपरम्[2] ।
तस्मिन् सुपरिज्ञाते जन्माध्यायं प्रवक्ष्यामि ॥ १ ॥
शीर्षोदये विलग्ने मूर्ध्ना प्रसवोऽन्यथोदये चरणैः ।
उभयोदये च हस्तैः शुभदृष्टे शोभनोऽन्यथा कष्टः ॥ २ ॥
भवनांशसदृशदेशे प्रसवो ज्ञेयः सदात्र युवतीनाम् ।
मिश्रगृहांशे वर्त्मनि स्थिरराश्यंशे तथास्वगृहे[3] ॥ ३ ॥
स्वगृहनवांशे लग्ने स्वगृहेऽन्यस्मिंन्यदि[4] प्रथमहर्म्ये ।
पितृमातृग्रहबलतस्तत्तत्स्वजनगृहेषु बलयोगात् ॥ ४ ॥
प्राकारतरुनदीषु च सूतिर्नीचाश्रितैः[6] सौम्यैः ।
नेक्षन्ते लग्नेन्दू यद्यकेस्था ग्रहा महाटव्याम् ॥ ५ ॥
सलिलभवनं च चन्द्रो जलराशौ वीक्षते तथा पूर्णः ।
प्रसवं सलिले विद्यात् बन्धूदयदशमगश्च यदा ॥ ६ ॥
सौम्यैर्लग्ने पूर्णे स्वगृहगते शशिनि सलिलसंयाते ।
पातालस्थैश्च शुभैर्जलजे लग्नेम्बुगेहगे शशिनि ॥ ७ ॥
वृश्चिककुलीरलग्ने सौरे चन्द्रेक्षिते त्ववटे ।
भवति प्रसवः स्त्रीणां वदन्ति यवनाः सह मणित्थैः ॥ ८ ॥
रविजे जलजविलग्ने क्रीडोद्याने बुधेक्षिते प्रसवः ।
रविणा देवागारे तथोषरे चैव चन्द्रेण ॥ ९ ॥
आरण्यभवनलग्ने गिरिवनदुर्गे तथा रवौ लग्ने ।
रुधिरेक्षिते श्मशाने शिल्पकनिलयेषु सौम्येन ॥ १० ॥
सूर्येक्षिते गोनृपदेववासे शुक्रेन्दुजाभ्यां रमणीयदेशे ।
शक्रेज्यदृष्टे द्विजवह्निहोत्रे नरोदये सम्प्रवदन्ति सूतिम् ॥ ११ ॥
स्वोच्चे दशमे जीवे द्वित्रिचतुर्भूमिके गृहे प्रसवः ।
मन्दर्क्षांशे साले चतुर्थदशमस्थितैः सौम्यैः ॥ १२ ॥
द्वौ द्वौ राशी मेषात् पूर्वादिषु संस्थितौ गृहविभागे ।
कोणेषु द्विशरीरा लग्नन्तु[8] भवेद्धि तत्प्रमुखैः[9] ॥ १३ ॥

---

१ आधानं. २ करम्. ३ तथान्यगृहे. ४ स्वगृहेऽन्यस्मिन् प्रतिद्वन्द्वे. ५ वर्गे. ६ चाश्रिते. ७ लग्ने. ८ लग्नस. ९ प्रमुखे.

दिग्भागराशिमण्डलकेन्द्रेषु खगेषु तच्छाला ।
अथ[1] मृगहयबलवत्त्वे गृहं द्विशालं त्रिशालं च ॥ १४ ॥
चित्रं नवं भृगुसुते च दृढं गुरौ च
दग्धं कुजे दिनकरे परिपूर्ण[2]काष्ठम् ।
चन्द्रे नवं च बहुशिल्पिकृतं बुधे च
जीर्णं भवेद्गृहमिहोष्णकरात्मजे च ॥ १५ ॥
वासगृहे द्यूनगतात् द्वारो दिक्पालकात् बलोपेतात् ।
भवनग्रहसंयोगैः प्रतिवेश्मा चिन्तनीयाः स्युः ॥ १६ ॥
देवालयाम्बुपावककोशविहारास्त[3]थोत्करोभूमेः ।
निद्रागृहं च भास्करशशिकुजगुरुभार्गवार्किबुधयोगात् ॥ १७ ॥
खट्वास्थितिर्भवनवद्युतविहगसमानि तत्र चिह्नानि ।
आस्तरणानि च विद्यात् शुभदृष्टिकृतानि दैवज्ञः ॥ १८ ॥
प्राच्यादिगृहद्वितयं भद्वितयं राशयश्च गात्राणि ।
आजानुशिरःशयनं ग्रहतुल्यं लक्षणं तत्र ॥ १९ ॥
ग्रहयुक्तं वा नियतं विनतत्वं च द्विमूर्तिराशिषु च ।
षट्त्रिनवान्त्याः पादाः पर्यङ्के[4]ऽङ्गानि राशयः शेषाः ॥ २० ॥
नीचस्थे भूशयनं चन्द्रेऽप्यथवा सुखे विलग्ने वा ।
शशिलग्नविवरयुक्तग्रहतुल्याः सूतिका ज्ञेयाः ॥ २१ ॥
अनुदितचक्रार्द्धयुतैरन्तर्बहिरन्यथा वदन्त्येके ।
लक्षणरूपविभूषणयोगस्तासां शुभैर्योगात् ॥ २२ ॥
क्रूरैर्विरूपदेहा लक्षणहीनाः सुरौद्रमलिनाश्च ।
मिश्रैर्मध्यमरूपा बलसहितैः सर्वमेवमवधार्यम् ॥ २३ ॥
द्वादशभागच्छेन्ने[5] वासगृहेऽवस्थिते सहस्रांशौ ।
दीपश्चरस्थिरादिषु तथैव वाच्यः प्रसवकाले ॥ २४ ॥
यावल्लग्नादुदितं वर्त्तिर्दग्धा तु तावती भवति ।
दीपः पूर्णे पूर्णः शशिनि क्षीणे क्षयस्तु तैलस्य ॥ २५ ॥
बलवति सूर्ये दृष्टे बहून् प्रदीपान् वदेत् कुपुत्रेण ।
अन्यैरपि[6] गतवीर्यैः सूतौ ज्योतिस्तृणैर्भवति ॥ २६ ॥

१ झष. २ जीर्ण. ३ उपस्करस्थानम्. ४ पर्यन्ते. ५ भागच्छिन्ने. ६ रपगत.

सौरांशेऽथ जलांशे चन्द्रेऽर्कजसंयुतेऽथवा हिबुके ।
तद्दृष्टे वा कुर्यात्तमसि प्रसवं न सन्देहः ॥ २७ ॥
होरामनीक्षमाणे शशिनि परोक्षस्थिते पितरि जातः ।
मेषूरणागते वा चरभे भानौ विदेशगते ॥ २८ ॥
द्युनिशोरर्कासितयोः कुजेन सन्दृष्टयोः पिताप्यभवत् ।
चरराशौ परदेशे युक्तेक्षितयोस्तु तत्र मृतः ॥ २९ ॥
पञ्चमनवमद्यूने पापैरर्कात्तु पापसंदृष्टैः ।
बद्धः पिताऽन्यदेशे राशिवशात् स्वेऽथवा मार्गे ॥ ३० ॥
जायात्रिकोणसंस्थैः क्रूरैरानन्दवर्जितः प्रसवः ।
दशमचतुर्थोपगतैः सौम्यैः सम्पत्तयो विपुलाः ॥ ३१ ॥
पश्यति न गुरुः शशिनं लग्नं च दिवाकरं सेन्दुम् ।
पापयुतं वा सार्कश्चन्द्रं यदि जारजातः स्यात् ॥ ३२ ॥
गुरुशशिरवयो नीचे सूतौ लग्नेऽथवार्कसूनुश्च ।
लग्नोडुपभृगुपुत्राः शुभैरदृष्टास्तथान्यजातश्च[1] ॥ ३३ ॥
क्लेशो मातुः क्रूरैर्बन्ध्वस्तगतैः शशाङ्कयुक्तैर्वा ।
चन्द्रात् सप्तमराशौ पापा मरणाय वक्रसन्दृष्टाः[2] ॥ ३४ ॥
चन्द्राद्दशमे भानुर्मातुर्मरणं करोति पापयुतः ।
शुक्रात् पञ्चमनवमे[3] सौरियुतस्तेन[4] वा दृष्टः ॥ ३५ ॥
चन्द्रात्त्रिकोणराशौ रविजो मातुर्वधं दिशति रात्रौ ।
शुक्रात्तथैव दिवसे भौमः पापेन सन्दृष्टः ॥ ३६ ॥
कुजसौरयोस्त्रिकोणे चन्द्रेऽस्तगते वियुज्यते मात्रा ।
दृष्टे सुरेन्द्रगुरुणा सुखान्वितो दीर्घजीवी च ॥ ३७ ॥
म्रियते पापैर्दृष्टे शशिनि विलग्ने कुजेऽस्तगे त्यक्तः ।
लग्नात्स्वलाभगतयोर्वसुधासुतमन्दयोरेवम् ॥ ३८ ॥
पश्यति सौम्यो बलवान् यादृग्गृह्णाति तादृशो जातः ।
शुभपापग्रहदृष्टे परैर्गृहीतोऽथवा[5] म्रियते ॥ ३९ ॥

---

१ जातः स्यात्. २ मरणाय निर्दिष्टाः. ३ भवने. ४ सौरियुतोर्कोऽथ.
५ गृहीतोपि स म्रियते.

एकांशस्थितयोर्वा[1] यमारयोस्त्यज्यतेऽथवा मात्रा ।
लग्नात्सप्तमभवने भौमे शनिवीक्षिते नियतम्[2] ॥ ४० ॥
यादृक्पश्यति सौम्यस्तत्तुल्यगुणं सुतः[3] समाधत्ते ।
पितृजननीसादृश्यं रवेः शशाङ्कस्य बलयोगात् ॥ ४१ ॥
सिंहाजगोभिरुदये जातो नालेन वेष्टितो जन्तुः ।
लग्ने कुजेऽथ सौरे राश्यंशसमानगात्रश्च ॥ ४२ ॥
भौमशनिद्रेक्काणे पापे लग्ने स्थिते शशियुते[3] वा ।
द्व्येकादशगैः सौम्यैरभिवेष्टितको भुजङ्गेन ॥ ४३ ॥
सूर्यश्चतुष्पदस्थः शेषा द्विशरीरसंस्थिता बलिनः ।
कोशैर्वेष्टितदेहौ यमलौ खलु संप्रजायेते[4] ॥ ४४ ॥
लग्ननवभागतुल्या मूर्तिर्बलसंयुताद्ग्रहाद्वापि ।
नवभागाद्वर्णोक्तिः शशियोगात्तत्र सूतस्य ॥ ४५ ॥
बहवो यदि बलयुक्ता मिश्रा मूर्त्तिस्तदा वाच्या ।
कुलजातिदेशपुरुषान् बुद्ध्वाऽऽदेशं[5] समादिशेत्तज्ज्ञः ॥ ४६ ॥
त्रिंशद्भागे भानुर्ग्रहस्य यस्य[6] स्थितो भवति ।
तत्तुल्या प्रकृतिः स्यादेवं मुनयोऽध्यवस्यन्ति ॥ ४७ ॥
तत्कालसुहृदरित्वं बलं च नीचोच्चसंभृतं ज्ञात्वा ।
ज्ञात्वा ग्रहस्वभावान् तेभ्यः सञ्चिन्त्यमन्यदपि ॥ ४८ ॥
क्षीणे शशिनि सपापे माता म्रियते पिता रवौ तद्वत् ।
बलिभिर्दृष्टे मिश्रैर्व्याधिः सौम्यैः शुभं भवति ॥ ४९ ॥
विपुलविमलमूर्तिः स्वोच्चगो वा स्वराशौ
गुरुसितयुत इन्दुर्बोधनेनानुदृष्टः ।
अतिशयशुभदाता पञ्चमे वाऽपि मातुः
पितुरपि खलु तद्वत् भास्करः सर्वदैव ॥ ५० ॥

इति कल्याणवर्मविरचितायां सारावल्यां
सूतिकाध्यायो नवमः ॥

---

१ एकांशावस्थितयोर्यमारयोस्त्यज्यते मात्रा. २ सुतम्. ३ सुते. ४ प्रसूयेते. ५ वर्णं. ६ यस्येह संस्थितो.

# दशमोऽध्यायः ।

आयुर्ज्ञानाभावे सर्वं विफलं प्रकीर्तितं यस्मात् ।
तस्मात्तज्ज्ञानार्थं रिष्टाध्यायं प्रवक्ष्यामि ॥ १ ॥
ओजे स्थिताः पुमांसः शुक्लेऽहनि सूरिभिः समाख्याताः ।
युग्मभवनेषु सर्वे कृष्णे निशि योषितो बलिनः ॥ २ ॥
त्रिविधमिह शास्त्रकारा नियमम[1]नियमं च योगजं प्राहुः ।
योगसमुत्थं तावद्वक्ष्ये पश्चात्तु परिशेषौ ॥ ३ ॥
वृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्त्तिः ।
अब्दैस्त्रिभिर्भार्गववदृष्टिहीनो लोकान्तरं प्रापयति प्रसूतम् ॥ ४ ॥
वक्री शनिर्भौमगृहं प्रपन्नश्चन्द्रेऽष्टषष्ठेऽथ चतुष्टये वा ।
कुजेन सम्प्राप्तबलेन दृष्टो वर्षद्वयं जीवयति प्रजातम् ॥ ५ ॥
भास्करहिमकरसहितः शनैश्वरो मृत्युदः प्रसवकाले ।
वर्षैर्नवभिर्यातैरित्याह ब्रह्मशौण्डाख्यः ॥ ६ ॥
भौमदिवाकरसौराश्छिद्रे जातस्य भौम[2]गृहे ।
म्रियतेऽवश्यं स नरो यमकृतरक्षोऽपि मासेन ॥ ७ ॥
एकः पापोऽष्टमगः शुक्रगृहे पापवीक्षितो वर्षात् ।
मारयति नरं जातं सुधारसो येन पीतोऽपि ॥ ८ ॥
रविशशिभवने शुक्रो द्वादशरिपुरन्ध्र[3]गैः शुभैः सर्वैः ।
दृष्टः करोति षड्भिर्वर्षैर्मरणं किमत्र चित्रं हि ॥ ९ ॥
कर्कटधामनि सौम्यः षष्ठाष्टम[4]संस्थितो विलग्नर्क्षात् ।
चन्द्रेण दृष्टमूर्त्तिर्वर्षचतुष्केण मारयति ॥ १० ॥
तीव्रफलराजयोगा यवनाद्यैर्ये विनिर्मितास्तेषु ।
जायन्ते खलु कुलजा रिष्टं तेषु प्रसूतानाम् ॥ ११ ॥
केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते यो हि ।
मासद्वयेन मरणं विनिर्दिशेत्तस्य जातस्य ॥ १२ ॥
गगनस्थो दिवसकरः पापैर्बहुभिर्निरीक्षितः सद्यः ।
मारयति भौमधामनि शनिभे च न संशयो भवति ॥ १३ ॥

---

१ नियतमनियतं च. २ यस्य शुक्रगृहे. ३ रन्ध्रगो. ४ षष्ठाष्टव्ययगतो.

लग्ने यद्रेक्काणा निगडाहिविहङ्गपाशधरसंज्ञाः ।
मरणाय सप्तवर्षैः क्रूरयुता न स्वपतिदृष्टाः ॥ १४ ॥
राहुश्चतुष्टयस्थो मरणाय निरीक्षितो भवति पापैः ।
वर्षैर्वदन्ति दशभिः षोडशभिः केचिदाचार्याः ॥ १५ ॥
पापास्त्रिकोणकेन्द्रे सौम्याः षष्ठाष्टमव्ययगताश्च ।
सूर्योदये प्रसूतः सद्यः प्राणांस्त्यजति जन्तुः ॥ १६ ॥
अंशाधिपजन्मपती लग्नपतिश्चास्तमुपगता यस्य ।
संवत्सरैस्तु मरणं निर्व्याजं कतिपयैरेव ॥ १७ ॥
राशिप्रमितैर्वर्षैर्मारयति विलग्नपो रिपुस्थाने ।
मासैर्द्रेक्काणपतिर्दिवसैरंशाधिपो हन्ति ॥ १८ ॥
मारयति षोडशाहाच्छनैश्चरः पापवीक्षितो लग्ने ।
संयुक्तो मासेन तु वर्षाच्छुद्धस्तु मारयति ॥ १९ ॥
क्षीणशरीरश्चन्द्रो लग्नस्थः क्रूरवीक्षितः कुरुते ।
स्वर्गगमनं हि पुंसां कुलीरगोऽजान् परित्यज्य ॥ २० ॥
वर्षान्मारयति शशी षष्ठाष्टमराशिसंस्थितो लग्नात् ।
सद्यः क्रूरैर्दृष्टः सौम्यैरब्दाष्टकाच्चैव ॥ २१ ॥
अशुभैशुभैः[1] सन्दृष्टे वर्षचतुष्केण निर्दिशेदन्तम् ।
अनुपातः कर्तव्यः प्रोक्तादूनैर्ग्रहैर्दृष्टे[2] ॥ २२ ॥
सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपसङ्गतैर्दृष्टाः ।
मासेन मृत्युदास्ते यदि न[3] शुभैस्तत्र सन्दृष्टाः ॥ २३ ॥
लग्नाद्द्वादशधनगैः क्रूरैर्म्रियते च रन्ध्ररिपुयुक्तैः ।
शुभसम्पर्कमयातैर्मासे षष्ठेऽष्टमे वाऽपि ॥ २४ ॥
लग्नाधिपजन्मपती षष्ठाष्टमरिःफगौ प्रसवकाले ।
अस्तमितौ मरणकरौ राशिप्रमितैर्वदेद्वर्षैः ॥ २५ ॥
होराधिपतिर्द्यूने पापजितो मरणमेव विदधाति ।
मासेन जन्मनाथस्तद्वच्चन्द्रो न यदि शुभदृष्टः ॥ २६ ॥
चन्द्रः कुजरवियुक्तः स्वसुतस्थाने न चापि शुभदृष्टः ।

---

१ अशुभैः शुभैश्च दृष्टो. २ न्यूनग्रहैर्दृष्टः. ३ तेन शुभैस्तु. ४ दृष्टः.

मरणं शिशोः प्रयच्छति वर्षे नवमे न सन्देहः ॥ २७ ॥
होरेश्वरस्तु मृत्यौ पापैः सकलैश्च दृश्यते बलिभिः ।
मासि चतुर्थे मरणं जातस्य करोति मुनिवाक्यम् ॥ २८ ॥
जन्माधिपतिः सूर्यः स्वपुत्रसहितोऽष्टमे भवति राशौ ।
वर्षैं राशिप्रमितैर्मरणाय सितेन सन्दृष्टः ॥ २९ ॥
व्ययाष्टषष्ठोदयगे शशाङ्के पापेन युक्ते शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु प्राणैर्वियोगं व्रजति प्रजातः ॥ ३० ॥
चक्रस्य पूर्वभागे पापाः सौम्यास्तथेतरे चैव ।
वृश्चिकलग्ने जाता गतायुषो वज्रमुष्टियोगेऽस्मिन् ॥ ३१ ॥
क्षीणे शशिनि विलग्ने पापैः केन्द्रेषु मृत्युसंस्थैर्वा ।
भवति विपत्तिरवश्यं यवनाधिपतेर्मतं चैतत् ॥ ३२ ॥
राश्यन्तगतैः पापैः सन्ध्यायां तुहिनरश्मिहोरायाम् ।
मृत्युः प्रत्येकस्थैः केन्द्रेषु शशाङ्कपापैश्च ॥ ३३ ॥
द्यूनचतुरश्रसंस्थे पापद्वयमध्यगे शशिनि जातः ।
विलयं प्रयाति नियतं देवैरपि रक्षितो बालः ॥ ३४ ॥
पापद्वयमध्यगते होरासप्ताष्टमस्थिते चन्द्रे ।
सौम्यैरबलैर्दृष्टे जातो म्रियते ध्रुवं ह्यत्र ॥ ३५ ॥
द्यूनाष्टमगैः पापैः क्रूरग्रहवीक्षितैः सह जनन्या ।
म्रियते शुभसंदृष्टैः सत्यस्य मताद्रुदेव्याधिम् ॥ ३६ ॥
ग्रहणोपगते चन्द्रे सक्रूरे लग्नगे कुजेऽष्टमगे ।
मात्रा सार्धं म्रियते चन्द्रवदर्के च शस्त्रेण ॥ ३७ ॥
क्षीणे शशिनि विलग्ने कण्टकनिधनाश्रितैस्तथा पापैः ।
सौम्यादृष्टे मृत्युः सद्यः सत्यस्य निर्देशः ॥ ३८ ॥
द्यूनगतेऽर्के लग्ने यमे कुजे वा विपर्यये वाऽपि ।
अन्यतरयुते वेन्दावशुभैर्दृष्टेऽचिरान्मृत्युः ॥ ३९ ॥
होरानिधनास्तगतैः पापैः क्षीणे व्ययस्थिते चन्द्रे ।
जातस्य भवेन्मरणं सद्यः केन्द्रेषु चेदशुभाः ॥ ४० ॥

---

१ मूर्त्तौ. २ पतेर्न सन्देहः. ३ वेलायां. ४ संस्थैः. ५ बालः. ६ निर्देशात्. ७ व्यवस्थिते. ८ चेन्न.

लग्नान्त्यनवमनैधनसंयुक्ताश्चन्द्रसूर्यसौराराः ।
जातस्य वधकृतः[1] स्युः सद्यो गुरुणा न चेद्दृष्टाः ॥ ४१ ॥
लग्ने चन्द्रेऽर्के वा पापा बलिनस्त्रिकोणनिधनेषु ।
सौम्यैरदृष्टयुक्ताः[2] सद्यो मरणाय कीर्तिता यवनैः ॥ ४२ ॥
शुक्रो रविशनिसहितो मारयति नरं सदा प्रसवकाले ।
दृष्टोऽपि देवगुरुणा नवभिर्वर्षैर्न सन्देहः ॥ ४३ ॥
यत्रस्थस्तत्रस्थो रुधिरार्कशनैश्चरेक्षितश्चन्द्रः ।
जननीमृत्युं कुर्यान्नतु सौम्यनिरीक्षितः सद्यः ॥ ४४ ॥
रुधिरशनैश्चरदृष्टो दिवसकरो दिवसजन्मनि तु यस्य ।
पापयुतो वा हन्यात् पितरं निःसंशयं जातः ॥ ४५ ॥
रहितो बुधगुरुशुक्रैर्जन्मनि रुधिराङ्गसौरसहितोऽर्कः ।
कथयति पितरमतीतं पितुरपि च शरीरकर्तारम् ॥ ४६ ॥
पापग्रहमध्यगतो दिवसकरो दिवसजन्मनिरतस्य ।
पापयुतो वा हन्यात् पितरं निःसंशयं जातः ॥ ४७ ॥
सूर्यादष्टमराशौ[3] यदि युक्तौ सौरलोहितौ प्रसवे ।
सौम्यादृष्टौ निधनं कुर्यातां सद्य एव पितुः ॥ ४८ ॥
पापग्रहसंयुक्तश्चरराशिगतो दिवाकरः प्रसवे ।
विषशस्त्रजलान्मृत्युं कथयत्यल्पायुषं पितरम् ॥ ४९ ॥
चन्द्रादष्टमराशौ नवमे वा सप्तमेऽपि वा पापाः ।
सर्वे तत्रान्यतमे हन्युर्जातं सह जनन्या ॥ ५० ॥
चरराशिगते सूर्ये दिनजन्मनि वीक्षिते कुपुत्रेण[4] ।
कथयति विदेशयातं जातस्य शरीरकर्तारम् ॥ ५१ ॥
चरराशिगतं सौरं यद्यर्को रात्रिजन्म वी(नी?) क्षेत ।
अत्रापि विदेशस्थं कथयति पितरं प्रसूतस्य ॥ ५२ ॥
रुधिरसहितस्तु सौरश्चरभवने रात्रिजन्मनिरतस्य ।
कथयति पितरमतीतं परदेशे नात्र सन्देहः ॥ ५३ ॥
यत्रस्थस्तत्रस्थस्वपुत्ररुधिराङ्गसङ्गतः सूर्यः ।

---

१ वधं कुर्युः. २ सौम्यैरमिश्रदृष्टाः. ३ सूर्यात्सप्तम. ४ तु पुत्रेण.

प्राग्जन्मनो निवृत्तं कथयति पितरं प्रसूतस्य ॥ ५४ ॥
जन्माष्टसप्तषष्ठद्वादशसंस्थेषु पापेषु ।
माता सुतेन सार्धं म्रियते नास्त्यत्र सन्देहः ॥ ५५ ॥
जीवति माता म्रियते सूनुः षष्ठाष्टमेषु[1] पापेषु ।
जन्माष्टसप्तमेषु च जीवति सूनुर्म्रियेत तन्माता ॥ ५६ ॥
वक्रो वा सौरो वा द्वादशसंस्थो नयनहन्ता ।
दक्षिणनयनं सौरो वाममथाङ्गारको हन्यात् ॥ ५७ ॥

युगपच्चन्द्रादित्यौ द्वादशभे विष्ठितौ[2] ग्रहौ स्याताम् ।
कुरुतः प्रसूतमन्धं पापः षष्ठेऽथवा निधने ॥ ५८ ॥
अथवाप्यन्यतरयुते द्वादशभे जायमानस्य ।
अत्रापि हरेन्नयनं दक्षिणमर्कः शशी सव्यम् ॥ ५९ ॥
स्वर्भानुनोपसृष्टा यदि होरा दिनकरश्च जामित्रे ।
जातस्तत्र मनुष्यो निःसन्दिग्धं भवत्यन्धः[3] ॥ ६० ॥

धनराशौ द्वादशभे चन्द्रः सूर्यश्च विष्ठितो[4] यत्र ।
तत्रापि भवत्यन्धो यद्यष्टमषष्ठयोः पापौ ॥ ६१ ॥
रजनिकरः षष्ठगतो निधने सूर्यो रवेः सुतस्तु[5] शुभे ।
वक्रः कुटुम्बराशौ अत्राप्यन्धो भवेज्जातः ॥ ६२ ॥
रुधिराङ्गसौरयुक्तश्चन्द्रो निधनेऽथवाऽपि षष्ठे वा ।
पित्तश्लेष्मविकारैर्दृष्टिं हन्यादशुभयुक्तः ॥ ६३ ॥
दक्षिणमष्टमसंस्थः सव्यं तु हरेत्समाश्रितः षष्ठम् ।
सौम्यैर्न[6] वीक्षिततनुः सद्यो न[7]हरेत्तु पश्चाद्वा ॥ ६४ ॥
दिनकरसुतेन सहितो निधने चान्त्ये[8] समाश्रितश्चन्द्रः ।
वातश्लेष्मविकारैर्दृष्टिं हन्यादशुभदृष्टः ॥ ६५ ॥
निधने दक्षिणनयनं त्यागे सव्यं हरेत्तु नियमेन ।
सौम्यैस्तु दृश्यमाने[9] न हरेदथवा हरेत्पश्चात् ॥ ६६ ॥
एतेनैव तु विधिना सौरारदिवाकराश्रितश्चन्द्रः ।

---

१ षष्ठान्त्यगेषु. २ निष्ठितौ. ३ भवेदन्धः. ४ निष्ठितो. ५ सुतो धनभे.
...री. ७ नयनं हरेद्धरेत्पश्चात्. ८ न्यतरमाश्रितश्चन्द्रः. ९ मानो.

कुर्याद्दृष्टिविकारं नानारोगैर्ध्रुवं जन्तोः ॥ ६७ ॥
एकादशे तृतीये होरायां पापसंयुते शशिनि ।
कर्णविकलो नरः स्यात्पापग्रहवीक्षितः सद्यः ॥ ६८ ॥
नवमे पञ्चमराशौ पापग्रहवीक्षितौ ग्रहौ स्याताम् ।
श्रोत्रोपघातमतुलं कुर्यातां जातमात्रस्य ॥ ६९ ॥
नवमे दक्षिणकर्णं वामं वै पञ्चमे ग्रहो हन्यात् ।
अत्रैव सौम्यभे वा शुभदृष्टे वा शुभं वाच्यम् ॥ ७० ॥
राशौ होरान्तरं प्राप्य यो यस्मिन् व्याधिमाप्नुयात् ।
तच्चा[1]स्य होराप्रसवे चन्द्रस्थानं च यद्भवेत् ॥ ७१ ॥
सव्यापसव्यभागे योगमथैव ग्रहास्तु सम्प्राप्ताः ।
कुर्युर्नृणां च चिह्नं व्यङ्गभयं पापवीक्षिताः सौम्याः ॥ ७२ ॥
विदित्वा त्रितयं ह्येतत् कृत्स्नस्य तु विशेषतः ।
शुभाशुभौ तु विज्ञेयौ ग्रहसंयोगकारणौ ॥ ७३ ॥
चन्द्रादित्यौ तृतीयस्थौ मीनक्षेत्रं[2] स यस्य तु ।
व्याधिं तत्र विजानीयात् त्रिरात्रं तस्य जीवितम् ॥ ७४ ॥
अतस्तृतीये नक्षत्रे समस्ते व्यस्तगेऽपि वा ।
रवौ रात्रिं परां जीवेच्चन्द्रे दशममाश्रिते ॥ ७५ ॥
सहितौ चन्द्रजामित्रे यस्याङ्गारकभास्करौ ।
जातस्य तस्य हि तदा भवेत्सप्ताहजीवितम् ॥ ७६ ॥
चतुरश्रस्थिताः पापा वामदक्षिणगा यदा ।
तदा यो व्याधिमाप्नोति दशरात्रं स जीवति ॥ ७७ ॥
त्रिकोणे दक्षिणे सूर्यश्चन्द्रो वामे यदा भवेत् ।
यस्तदा लभते व्याधिं द्वादशाहं स जीवति ॥ ७८ ॥
त्रिकोणस्थो यदा चन्द्रश्चतुरश्रेऽथ भास्करः ।
तदा दुर्व्याधिना पुत्रस्त्रिरात्रं नातिवर्तते ॥ ७९ ॥
यदा होरा चतुर्थस्थश्चन्द्रः षष्ठस्थितो रविः ।
अष्टादशाहं च नरस्तदा व्याधिसमन्वितः ॥ ८० ॥

---

१ तस्माच. २ क्षेत्रस्य.

रविर्यदा चन्द्रमसस्त्रिकोणस्थानमाश्रितः।
विंशतिं दिवसान् जीवेत्तदा व्याधिभयार्दितः॥ ८१॥
होराष्टमस्थितः सूर्यः सौरभौमनिरीक्षितः।
यः पुमान् प्राप्नुयाद्व्याधिं न स जीवेद्विपद्यते[1]॥ ८२॥
होरायां कण्टके भौमो भवेद्यस्य प्रजायतः।
न च केन्द्रगतो जीवो जायते मृत एव सः॥ ८३॥
अथ होरागतः सूर्यो न च केन्द्रे बृहस्पतिः।
निधने वा परः कश्चित् जातमात्रो विनश्यति॥ ८४॥
होरायां कण्टके चन्द्रो न च केन्द्रे बृहस्पतिः।
निधने वा[3] परः कश्चित् जातमात्रो विनश्यति॥ ८५॥
द्रेक्काणजामित्रगतो यस्य स्याद्दारुणग्रहः।
होरागतः शशाङ्कश्च सद्यो हरति जीवितम्॥ ८६॥
ग्रहाः समेयुर्बहवो निधने यस्य जन्मनि।
मासं वा सप्तरात्रं वा तस्यायुः समुदाहृतम्॥ ८७॥
शनैश्चरश्च होरायां निधने च महीसुतः।
न च देवगुरुः केन्द्रे मृतगर्भः प्रसूयते॥ ८८॥
यः प्राग्विलग्ने द्रेक्काणस्तत्समानो यदा ग्रहः।
भवेत्त्रिकोणगाः पापास्तत्समानफलो भवेत्॥ ८९॥
सौरे व्याधिमवाप्नोति मरणं धरणीसुते।
सूर्ये स्याद्व्याधिवैकल्यं मरणं नात्र संशयः॥ ९०॥
अथ होरागतो भौमः केन्द्रस्थश्च भृगोः सुतः।
स वै मरणमाप्नोति होरायां पुनरागते॥ ९१॥
गुरुस्त्रिकोणे होरायां होरेशश्च महीसुतः।
तस्यान्यतरकेन्द्रस्थः सद्यो जीवितनाशनः॥ ९२॥
न नैधने ग्रहः[2] कश्चित् पापो होरागतोऽथवा।
केन्द्रे वान्यतरे[4] जीवो जीवत्यष्टशतोत्तरम्॥ ९३॥
न केन्द्रे कश्चिदाग्नेयो न त्रिकोणे न नैधने।
गुरुशुक्रौ च केन्द्रस्थौ जीवेदष्टशताधिकम्॥ ९४॥

१ विपत्स्यते. २ पापकः. ३ गुरुः. ४ केन्द्रेष्वन्यतमे.

यदि होरागतः शुक्रः केन्द्रे वान्यतमे गुरुः ।
नैधने न च पापः स्यात् सविंशं जीवते शतम् ॥ ९५ ॥
राशौ कर्कटहोरायां गुरुशुक्रौ समन्वितौ[1] ।
गुरुश्चन्द्रयुतो वाऽपि निधने न च कश्चन ॥ ९६ ॥
न च केन्द्रगताः पापा न त्रिकोणे च जायते ।
तस्यायुरमरप्रख्यं निश्चयो(ये) न तु कीर्त्यते ॥ ९७ ॥
निधनास्तव्ययलग्नत्रिकोणगाः क्षीणचन्द्रसंयुक्ताः ।
पापा बलिनः शुभदैरदृश्यमाना गतायुषः[2] प्रायः ॥ ९८ ॥
योगे बलिनः स्थानं[3] स्वं वा लग्नं गतेऽपि वा चन्द्रे ।
बलवति पापैर्दृष्टे वर्षान्ते मृत्युकालः स्यात् ॥ ९९ ॥
रविचन्द्रभौमगुरुभिः कुजगुरुसौरेन्दुभिस्तथैकस्थैः ।
रविशनिभौमशशाङ्कैर्मरणं खलु पञ्चभिर्वर्षैः ॥ १०० ॥
रविणा[4] युक्तः शशिजः सौम्यैर्दृष्टो विनाशयति नूनम् ।
एकादशभिर्वर्षैर्देवाङ्केऽपि स्थितं जातम् ॥ १०१ ॥
लग्ने रविमन्दकुजैः[5] शुक्रगृहे सप्तमे शशी क्षीणः ।
दृष्टो न देवगुरुणा सप्तभिरब्दैर्विनाशयति ॥ १०२ ॥
केन्द्रे रविमुषिततनुः क्षितिसुतमन्दावलोकितोऽथ युतः ।
वर्षचतुष्के चन्द्रो मारयति किमत्र गणितेन ॥ १०३ ॥
लग्नाधिपतेश्चन्द्रो मरणपदस्थोऽतिकृष्णतां यातः ।
क्रूरैः सकलैर्दृष्टो न शुभैः सर्वैस्त्रिभिस्तु मारयति ॥ १०४॥
लग्नाधिपतिः पापः शशिनोंशे रिःफगो यदि च चन्द्रात् ।
क्रूरैर्विलोक्यमानो मारयति शिशुं नवभिरब्दैः ॥ १०५ ॥
दर्शनभागे सौम्याः क्रूराश्चादृश्यके प्रसवकाले ।
राहुर्लग्नोपगतो यमक्षयं नयति पञ्चभिर्वर्षैः ॥ १०६ ॥
राहुः सप्तमभवने शशिसूर्यनिरीक्षितो न शुभदृष्टः ।
दशभिर्द्वाभ्यां सहितैरब्दैर्जातं विनाशयति ॥ १०७ ॥

---

१ गुरुशुक्रसमन्विते. २ युषं प्रायः. ३ स्थाने. ४ रविशशियुक्तः. ५ कुजाः शत्रुगृहे.

घटसिंहवृश्चिकोदयकृतस्थितिर्जीवितं हरति राहुः ।
पापैर्निरीक्ष्यमाणः सप्तमितैर्निश्चितं वर्षैः ॥ १०८ ॥
केतोरुदयं पूर्वं पश्चादुल्कादिपवननिर्घाताः ।
रौद्रे सार्पमुहूर्ते[1] प्राणैः सन्त्यज्यते जन्तुः ॥ १०९ ॥
क्षीणं यदा शशाङ्कं पश्येद्राहुः समागतं पापैः ।
मारयति तदा दिवसैर्निर्व्याजं कतिपयैरेव ॥ ११० ॥
कुम्भे दिशति शशाङ्को भागे मृत्युं तथैकविंशाख्ये[2] ।
सिंहे च पञ्चमेंशे वृषे[3] च नवमे तथैवोक्तः ॥ १११ ॥
अलिनि त्रिविंशयुक्ते मेषे च तथाष्टमे दिशति मृत्युम् ।
कर्कटके द्वाविंशे तुलिनि चतुर्थे मृगे विंशे ॥ ११२ ॥
कन्यायां प्रथमेंशे धनुर्धरेऽष्टादशे झषे दशमे ।
मिथुने च द्वाविंशे शशी प्रसूतस्य मरणकरः ॥ ११३ ॥
ये भुक्ताः[4] शशिनोंशा जन्मनि वर्षैर्गतैस्तु तावद्भिः ।
मरणं हि जन्मभाजामप्यन्तकबद्धरक्षाणाम् ॥ ११४ ॥
एवं सर्वप्रयत्नेन जायमानस्य देहिनः ।
होरास्थानानि[5] केन्द्राणि चिन्तनीयानि तद्यथा ॥ ११५ ॥
चिन्तयेज्जायमानस्य स्थानराशिषु नित्यशः ।
बृहस्पतिर्नृणां जीवः तस्य[6] नित्यं बृहस्पतेः ॥ ११६ ॥
पञ्चदशषट्समेतश्चत्वारिंशत्तथैकविंशच्च[7] ।
शतमर्थं चत्वारिंशत्[8] षष्टिस्त्रिंशत् क्रमायु होरायाः[9] ॥ ११७ ॥
तृतीयचतुर्थपञ्चमसप्तमनवमदशमैकादशगृहेषु जीवस्थितौ[10] वर्षाः[11] ।

इति कल्याणवर्मविरचितायां सारावल्यां अरिष्टाध्यायो दशमः ॥

१ सति च मुहूर्त्ते. २ तथैकविंशेंशे. ३ क्रूरेण वृषे मृतिर्मरणभागे. ४ ये तूक्ताः. ५ स्थानेषु. ६ तस्मान्मृत्युं. ७ तथैव विंशश्च. ८ त्रिंशच्चत्वारिंशत्. ९ पञ्चाशदेव यथोक्तहोरायाः. १० वोत्थिता. ११ प्रोक्ताः सहजे तुर्ये पञ्चमके सप्तमे च नवमे च । दशमे चैकादशके गृहेषु जीवस्थितौ वर्षाः ॥ ११८ ॥

## एकादशोऽध्यायः ।

संभूतारिष्टाख्या भङ्गस्तेषां यथा भवेद्योगैः ।
तानागमतो वक्ष्ये प्रधानभूता [1]यतस्तेत्र ॥ १ ॥
उडुपतिकृतरिष्टानां भङ्गस्तावन्निरूप्यते [2]पूर्वम्
[3]सम्यक् शेषाणामपि यथामतं ब्रह्मपूर्वाणाम् ॥ २ ॥
सर्वैर्गगनभ्रमणैर्दृष्टश्चन्द्रो विनाशयति रिष्टम् ।
आपूर्यमाणमूर्तिर्यथा नृपः [4]सन्नयेद्वेषम् ॥ ३ ॥
चन्द्रः सम्पूर्णतनुः शुक्रेण निरीक्षितः सुहृद्भागे ।
रिष्टहराणां श्रेष्ठो वातहराणां यथा वस्तिः ॥ ४ ॥
परमोच्चे शिशिरतनुर्भृगुतनयनिरीक्षितो हरति रिष्टम् ।
सम्यग्विरेकवमनं [5]कफवित्तानां यथादोषम् ॥ ५ ॥
चन्द्रः शुभवर्गस्थः क्षीणोऽपि शुभेक्षितो हरति रिष्टम् ।
फलमिव महातिसारं [6]जातीफलवल्कलक्कथितम् ॥ ६ ॥
सप्ताष्टमषष्ठस्थाः शशिनः सौम्या हरन्त्यरिष्टफलम् ।
पापैरमिश्रचाराः कल्याणघृतं यथोन्मादम् ॥ ७ ॥
युक्तः शुभफलदायिभिरिन्दुः [7]सौम्यैर्निहन्त्यरिष्टानि ।
तेषामेव त्र्यंशे लवणस्रुतिपूरवच्छ्रवणरो[8]गम् ॥ ८ ॥
आपूर्यमाणमूर्तिर्द्वादशभागे शुभस्य यदि चन्द्रः ।
रिष्टं नयति विनाशं तक्राभ्यासो यथा गुदजम् ॥ ९ ॥
सौम्यक्षेत्रे चन्द्रो होरापतिना विलोकितो [9]हन्ति ।
रिष्टं न वीक्षितोऽन्यैः कुलाङ्गनाकुलमिवान्यगता ॥ १० ॥
क्रूरभवने शशाङ्को भवनेशनिरीक्षितस्तदनुवर्गे ।
रक्षति शिशुं प्रजातं कृपण इव धनं प्रयत्नेन ॥ ११ ॥
जन्माधिपतिर्बलवान् सुहृद्भिरभिवीक्षितः शुभैर्भङ्गम् ।
रिष्टस्य करोति सदा भीरुरिव प्राप्तसंग्रामः ॥ १२ ॥
जन्माधिपतिर्लग्ने दृष्टः सर्वैर्विनाशयति रिष्टम् ।
घृष्टोषणविदलाभ्यां प्रत्येककृताञ्जनं यथा शुक्रम् ॥ १३ ॥

---

१ भूतानतस्तंत्र. २ सम्यकु. ३ शेषाणामपि पश्चात्. ४ सुनयविद्वेष्टॄन्.
५ वित्तकफानां. ६ दाडिम. ७ सर्वैर्निहन्त्यरिष्टानि. ८ शूलम्. ९ हरति.

स्वोच्च[1]स्थस्वगृहेथवापि सुहृदां वर्गे[2]ऽपि सौम्ये[3]ऽथवा
संपूर्णः शुभवीक्षितः शशधरो वर्गे स्वकीयेऽथवा ।
शत्रूणामवलोकने न पतितः पापैरयुक्तेक्षितो
रिष्टं हन्ति सुदुस्तरं दिनपतिः प्रालेयराशिं यथा ॥१४॥
शशिनोऽन्त्ये बुधसितयोराये क्रूरेषु वाक्पतौ गगने ।
दुरितं चातुर्थिकमिव नश्यति मुनिकुसुमरसनस्यैः ॥ १५ ॥
लग्नेश्वरस्य चन्द्रः षट्त्रिदशायहिबुकेषु शुभदृष्टः ।
क्षपयति समस्तरिष्टान्यनुर्याते[4] नृपतिरोध इव ॥ १६ ॥
एको जन्माधिपतिः परिपूर्णबलः शुभैर्दृष्टः[5] ।
हन्ति निशाकररिष्टं व्याल इव मृगान् वने मर्त्तः[6] ॥ १७ ॥

इति कल्याणवर्मविरचितायां सारावल्यां चन्द्रारिष्टभङ्गो नामैकादशोऽध्यायः ॥

## द्वादशोऽध्यायः ।

सर्वातिशाय्यतिबलः[7] स्फुरदंशुमाली
लग्ने स्थितः प्रशमयेत् सुरराजमन्त्री ।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव चक्रधरे प्रणामः ॥ १ ॥
सौम्यग्रहैरतिबलैर्विबलैश्च पापै-
र्लग्नं च सौम्यभवने[10] शुभदृष्टि[11]युक्तम्[12] ।
सर्वापदा[13]विरहितो भवति प्रसूतः
पूजाकरः खलु यथा दुरितैर्ग्रहाणाम् ॥ २ ॥
पापा यदि शुभवर्गे सौम्यैर्दृष्टा शुभांशवर्गस्थैः ।
निघ्नन्ति तदा रिष्टं पतिं विरक्ता यथा युवतिः ॥ ३ ॥
राहुस्त्रिषष्ठलाभे लग्नात् सौम्यैर्निरीक्षितः सद्यः ।
नाशयति सर्वदुरितं मारुत इव तूलसंघातम् ॥ ४ ॥

---

१ स्वोच्चे वा. २ वर्गेथ. ३ सौम्येऽपि. ४ अनुयातो निरुप. ५ शुभग्रहैर्दृष्टः. ६ मत्तान्. ७ सर्वानिमानतिबलः, सर्वातिगाम्यतिबलः. ८ जालो. ९ शूल. १० भवनं. ११ भृगुदृष्टिपुष्टम्. १२ युक्ते. १३ सर्वापदाभिरहितो.

शीर्षोदयेषु राशिषु सर्वैर्गगनाधिवासिभिः सूतौ ।
प्रकृतिस्थैश्चारिष्टं विक्रियते[1] घृतमिवाग्निष्ठम् ॥ ५ ॥
तत्काले यदि विजयी शुभग्रहः शुभे निरीक्षितो वर्गे ।
तर्जयति[2] सर्वरिष्टं मारुत इव पादपान् प्रबलः ॥ ६ ॥
परिविष्टो गगनचरः क्रूरैश्च विलोकितो हरति पापम् ।
स्नानं सन्निहितानां[3] कृतं यथा भास्करग्रहणे ॥ ७ ॥
स्निग्धमृदुपवनभाजो[4] जलदाश्च[5] तथैव खेचराः शस्ताः[7] ।
स्वस्थाः[6] क्षणाच्च रिष्टं शमयन्ति[8] रजो यथाम्बुधारौघः[9] ॥ ८ ॥
उदये चागस्त्यमुनेः सप्तर्षीणां मरीचिपुत्राणाम्[10] ।
सर्वारिष्टं नश्यति तम इव सूर्योदये जगतः ॥ ९ ॥
अजवृषकर्किविलग्ने रक्षति राहुः समस्तपीडाभ्यः ।
पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ॥ १० ॥
यत्नेन[11] भङ्गमपरे सरोजजन्मातिविस्मयं कुरुते ।
तज्ज्ञः[12] कष्टमनिष्टं समतटदेशे यथा किरटः[13] ॥ ११ ॥
बहवो यदि शुभफलदाः खेटास्तत्रापि शीर्यते रिष्टम् ।
सूर्यात् त्रिकोण इन्दौ यथैव यात्रा नरेन्द्रस्य ॥ १२ ॥
गुरुशुक्रौ च केन्द्रस्थौ जीवेद्वर्षशतं नरः ।
गृहानिष्टं हिनस्त्याशु[14] चन्द्रानिष्टं तथैव च ॥ १३ ॥

बन्ध्वास्पदोदयविलग्नगतौ कुलीरे
गीर्वाणनाथसचिवः सकलश्च चन्द्रः ।
जूके रवीन्दुतनयावपरे च लाभे
दुश्चिक्यशत्रुभवनेष्वमितं तदायुः ॥ १४ ॥

एते सर्वे भङ्गा मया निरुक्ताः पुरातनाः सिद्धाः ।
यैर्ज्ञातैर्दैवविदो नरेन्द्रवाल्लभ्यमायान्ति ॥ १५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां अरिष्टभङ्गो नाम द्वादशोऽध्यायः ॥

१ विलीयते. २ वर्ज. ३ हितायां. ४ पवनविरजो. ५ जलजा. ६ स्वस्थाः. ७ शास्ति. ८ शमयति हि. ९ यथाम्बुधराः. १० पूर्वाणां. ११ यातैस्त्रिभागमपरैः. १२ तज्ज्ञः. १३ सरटः. १४ भिनत्त्याशु.

# त्रयोदशोऽध्यायः ।

सुनफाऽनफादुरुधरा भवन्ति योगाः क्रमेण रविरहितैः ।
वित्तान्त्योभयसंस्थैः कैरववनबान्धवाद्विहगैः ॥ १ ॥
एते न यदा योगाः केन्द्रग्रहवर्जितः शशाङ्कश्च ।
केमद्रुमोऽतिकष्टः शशिनि समस्तग्रहादृष्टे ॥ २ ॥
सुनभानभासरूपास्त्रिंशद्योगा(३१)स्त्रिसंगुणा षष्टिः(१८०) ।
संख्या धौरुधुराणां प्रस्तारविधौ समाख्याताः ॥ ३ ॥

श्रीमान् स्वबाहुविभवो बहुधर्मशीलः
शास्त्रार्थविद्बहुयशाः स्वगुणाभिरामः ।
शान्तः सुखी क्षितिपतिः सचिवोऽथ वा स्यात्
सूतः पुमान् विपुलधीः सुनभाभिधाने ॥ ४ ॥

वाग्मी प्रभुर्द्रविणवानगदः सुशीलो
भोक्तान्नपानकुसुमाम्बरभामिनीनाम् ।
ख्यातः समाहितगुणः सुखशस्तचित्तो
योगे निशाकरकृते त्वनभे सुवेषः ॥ ५ ॥

वाग्बुद्धिविक्रमगुणैः प्रथितः पृथिव्यां
स्वातन्त्र्यसौख्यधनवाहनभोगभोगी ।
दाता कुटुम्बधनपोषणलब्धखेदः
सद्वृत्तवान् धुरुधुराप्रभवो धुरिस्थः ॥ ६ ॥

कान्तान्नपानगृहवस्त्रसुहृद्विहीनः
दारिद्र्यदुःखगददैन्यमलैरुपेतः ।
प्रेष्यः खलः सकललोकविरुद्धवृत्तिः
केमद्रुमे भवति पार्थिववंशजोऽपि ॥ ७ ॥

केन्द्रादिस्थैर्ग्रहैर्योगाः कीर्तिता येऽनभादयः ।
तान् प्रधानान् समानान् स्वांश्चन्द्ररूपान्विचिन्तयेत् ॥८॥
भौमादीनां बलं देशं जातस्य च कुलं बुधः ।
विज्ञाय प्रवदेत् सम्यक् सुनभादिकृतं फलम् ॥ ९ ॥

---

१ च सर्व. २ त्पृथु. ३ सुगुणो. ४ कान्तः. ५ कामिनीनाम्. ६ वित्तो. ७ भागी. ८ दान्तः. ९ जनपोषण. १० बन्धुगृहवस्त्र.

विक्रमवित्तप्रायो निष्ठुरवचनश्चभूपतिश्चण्डः ।
हिंस्रो दम्भविरोधी सुनभायां भौमसंयोगे ॥ १० ॥
श्रुतिशास्त्रगेयकुशलो धर्म[1]परः काव्यकृन्मनस्वी च ।
सर्वहितो रुचिरतनुः सुनभायां सोमजे भवति ॥ ११ ॥
विद्याचार्यं ख्यातं नृपतिं नृपतिप्रियं वाऽपि ।
सुकुटुम्बधनसमृद्धं सुनभायां सुरगुरुः कुरुते ॥ १२ ॥
स्त्रीक्षेत्रवि[2]त्तविभवश्चतुष्पदाढ्यः सुविक्रमो भवति ।
नृपसत्कृतः सुधीरो दक्षः शुक्रेण सुनभायाम् ॥ १३ ॥
निपुणमतिर्ग्रामपुरैर्नित्यं संपूजितो धनसमृद्धः ।
सुनभायां रविपुत्रे क्रियासु गुप्तो भवेद्धीरः ॥ १४ ॥

इति सुनभाप्र[3]कारः ।

चोरस्वामी धृष्टः स्ववं[4]शो मानी रणोत्कटः क्रोधी ।
श्रे[5]ष्ठः श्लाघ्यः सुतनुः कुजेऽनभायां सुल[6]भश्च ॥ १५ ॥
[7]गन्धर्वलेख्यपटुः कविः प्रवक्ता नृपाप्तसत्कारः ।
रुचिरतनुस्त्वनभायां प्रसिद्धकर्मा बुधेन भवेत् ॥ १६ ॥
गाम्भीर्यसत्त्वमेधास्थानरतो बुद्धिमान् नृपाप्तयशाः ।
अनभायां त्रिदशगुरौ[8] संजातः [9]सत्त्वविद्भवति ॥ १७ ॥
युवती[10]नामतिसुभगः प्रणयी क्षितिपस्य [11]गोपतिः ख्यातः ।
[12]कान्तः कनकसमृद्धस्त्वनभायां भार्गवे भवति ॥ १८ ॥
विस्तीर्णभुजो नेता गृहीतवाक्यश्चतुष्पदसमृद्धः ।
दुर्वनिताया भ[13]क्तोः गुणसहितश्चार्कपुत्रेण ॥ १९ ॥

इत्यनभाप्रकरणम् ।

आनृतिको बहुवित्तो निपुणोऽतिशठोऽ[14]धिको लुब्धः ।
वृद्धासतीप्रसक्तः कुलाग्रणीः शशिनि भौमबुधमध्ये ॥ २० ॥
ख्यातः कर्मसु विभवी बहुजनवैरस्त्वमर्षणो हृष्टः ।
कुलरक्षी कुजगुर्वोः सङ्ग्रहशीलः शशिनि मध्ये ॥ २१ ॥

---

१ रतः २ वित्तगृहवां. ३ प्रकरणम्. ४ वंश. ५ सेव्य. ६ प्रगल्भश्च. ७ गान्धर्व. ८ शुभो. ९ सत्कविर्भवति. १० युवतिजनानां. ११ भोगवान् कान्तः. १२ कनकसमृद्धश्चण्ड. १३ भर्त्ता. १४ गुणाधिको.

उत्तमरामः[1] सुभगो विवादशीलः शुचिर्भवेद्दक्षः ।
व्यायामी रणशूरः सितारयोर्मध्यगे चन्द्रे ॥ २२ ॥
कुत्सितयोषिद्रमणो[2] बहुसंचयकारको व्यसनतप्तः ।
क्रोधी पिशुनो रिपुमान्[3] यमारयोः स्याद्दुरुधरायाम् ॥२३॥
धर्मपरः शास्त्रज्ञो वाचालः सत्कविर्धनोपेतः ।
त्यागयुतो विख्यातो बुधगुरुमध्ये स्थिते चन्द्रे ॥ २४ ॥
प्रियवाक् सुभगः कान्तः प्रनृत्तगेयादिषु प्रियो भवति ।
सेव्यः शूरो मन्त्री बुधसितयोर्धुरुधुरायोगे ॥ २५ ॥
देशाद्देशं गच्छति वित्तपरो नातिविद्यया सहितः ।
चन्द्रेऽन्येषां पूज्यः स्वजनविरोधी ज्ञमन्दयोर्मध्ये ॥ २६ ॥
धृतिमेधाशौर्ययुतो नीतिज्ञः कनकरत्नपरिपूर्णः ।
ख्यातो नृपकृत्यकरो गुरुसितयोर्धुरुधुरायोगे ॥ २७ ॥
सुखनयविज्ञानयुतः प्रियवाग्विद्वान् धुरंधरो नार्यः ।
शान्तो धनी सुरूपश्चन्द्रे गुरुभानुजान्तस्थे ॥ २८ ॥
वृद्धचरितं कुलाग्र्यं निपुणं स्त्रीवल्लभं धनसमृद्धम् ।
नृपसत्कृतं बहुधनं कुरुते चन्द्रः सितासितयोः ॥ २९ ॥

इति धुरुधुराप्रकरणम् ।

सूर्यात् केन्द्रादिगतो निशाकरः स्वल्पमध्यभूयिष्ठान् ।
कुर्यात्क्रमेण धनधीनैपुणविज्ञानविनयांश्च ॥ ३० ॥

औत्पातिकः[4] कृशतनुर्निशि चाप्यदृश्यो
दृश्यो[5] दिवा शिशिरगुर्भयशोकदः स्यात् ।
एवं स्थितः समफलं पृथिवीपतित्वं
यातोऽन्यथा प्रकुरुते परिपूर्णमूर्तिः ॥ ३१ ॥

लग्नादुपचयसंस्थैः शुभैः समस्तैर्महाधनो द्वाभ्याम् ।
मध्यं चैकेनाधममेवं चन्द्रादपि तदूनः ॥ ३२ ॥

---

१ उत्तमरामा, उत्तमकामः. २ द्रविणो. ३ रिपुहा यमारयोः. ४ अल्पातिकः, अल्पात्मजः. ५ कृष्णे तु शीतकिरणो.

अधियोगादयोऽन्ये[1]ऽपि मयात्रैव न कीर्तिताः ।
नृपयोगा यतस्ते हि वक्ष्ये तत्रैव तानहम् ॥ ३३ ॥

इति कल्याणवर्मविरचितायां सारावल्यां चन्द्रविधिर्नाम त्रयोदशोऽध्यायः ॥

## चतुर्दशोऽध्यायः ।

सूर्यायव्यग्रैर्वा[2]शिर्द्वितीयगैश्चन्द्रवर्जितैर्वेशिः[3] ।
उभयस्थितैर्ग्रहेन्द्रैरुभयचरी नामतः प्रोक्ता ॥ १ ॥
मन्ददृशं स्थिरवचनं परिभूतपरिश्रमं नतोर्ध्वतनुम् ।
कथयति यवनाधिपतिर्वेशिसमुत्थं तथा पुरुषम् ॥ २ ॥
वसुसंचयवित्तसुहृत् स्याद्वेशौ सुरगुरौ भवति जातः ।
भीरुः कार्योद्विग्नो लघुचेष्टो भृगुसुते पराधीनः ॥ ३ ॥
परिकर्मको[4] दरिद्रो मृदुर्विनीतो बुधे सलज्जश्च ।
मार्गलघुः[5] क्षितिपुत्रे परोपकारी नरो वेशौ ॥ ४ ॥
परदाररतश्चण्डो वृद्धाकारः शठो घृणी ।
भवेन्मनुष्यः सधनो याते वेशिं शनैश्चरे ॥ ५ ॥

इति वेशिप्रकरणम् ।

उत्सृष्टवचाः स्मृतिमानुद्योगयुतो निरीक्षते तिर्यक् ।
पूर्वशरीरे पृथुलो नृपतिसमः सात्विको वाशौ ॥ ६ ॥
धृतिसत्वबुद्धियुक्तो भवति गुरौ वाशिके पवनसारः[6] ।
शूरः ख्यातो गुणवान्[7] यशस्करो भार्गवे पुरुषः ॥ ७ ॥
प्रियभाषी रुचिरतनुर्वाश्यां स्याद्बोधने पराज्ञाकृत् ।
सङ्ग्रामे विख्यातो भूमिसुतेनान्यवाक्यश्च[8] ॥ ८ ॥
वणिक् कुलस्वभावः[9] स्यात् परद्रव्यापहारकः ।
गुरुद्वेषी सुनिस्त्रिंशो गते वाशिं शनैश्चरे ॥ ९ ॥
संनिरीक्ष्य रवेर्वीर्यं ग्रहाणां चापि तत्वतः ।
राश्यंशसङ्गमात्सर्वं फलं ब्रूयाद्विचक्षणः ॥ १० ॥

---

१ येऽपि. २ वाशी तद्वनगैश्चन्द्रवर्जितैः. ३ वैशी. ४ कर्कशो. ५ मार्गज्ञः ६ वचनसारः. ७ बलवान्. ८ भाग्यश्च. ९ खल.

सर्वसह[1]सुभद्रः समकायः सुस्थिरो विपुलसत्वः ।
नात्युच्चः परिपूर्णो[2] विद्यायुक्तो भवेदुभयचर्याम् ॥ ११ ॥
सुभगो बहुभृत्यधनो बन्धूनामाश्रयो नृपतिकूल्यः ।
नित्योत्साही हृष्टो भुङ्क्ते भोगानुभयचर्याम् ॥ १२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां
वेशिवास्युभयचर्याध्यायश्चतुर्दशः ।

---

## पञ्चदशोऽध्यायः ।

यवनाचार्यैर्वृद्धैर्द्विग्रहयोगेषु यत्फलं प्रोक्तम् ।
तदहमपहाय मत्सरमधुना वक्ष्ये विशेषेण ॥ १ ॥
युवतीनां वशगः स्यादविनीतः कूटवित्[3] पृथुलवित्तः ।
आसवविक्रयकुशलो रव्युडुपत्योः क्रियानिपुणः ॥ २ ॥
ओजस्वी साहसिको मूर्खो बलसत्वसंयुतोऽनृतवाक् ।
पापमतिर्विधनिरतो[4] रविकुजयोः स्यात् प्रचण्डश्च ॥ ३ ॥
सेवाकृदस्थिरधनो रविज्ञयोः प्रियवचा यशोर्थः स्यात् ।
आर्यः क्षितिपतिदयितः सतां च बलरूपवित्तविद्यावान् ॥ ४ ॥
बहुधर्मो नृपसचिवः समृद्धिमा[5]न्मित्रसंश्रयाप्तार्थः ।
सूर्ये बृहस्पतियुते भवेदुपाध्यायसंज्ञश्च ॥ ५ ॥
शस्त्रप्रहरणविद्याशक्तियुतो नेत्रदुर्बलश्चरमे[6] ।
रङ्गज्ञो रविसितयोः स्त्रीसङ्गाल्लब्धबन्धुर्धनः[7] ॥ ६ ॥
धातुज्ञो धर्ममयः स्वधर्म[8]निरतः प्रणष्टसुतदारः ।
निजवंशगुणैः शुद्धः[9] शनिरव्योरल्पशीलश्च ॥ ७ ॥
शूरो रणप्रतापी मल्लोऽसृग्वेदनार्त्तदेहश्च[10] ।
मृच्चर्मधातुशिल्पी कूटज्ञश्चन्द्रकुजयोगे ॥ ८ ॥
काव्यकथास्वतिनिपुणः सधनस्त्रीसंमतः सुरूपश्च ।
स्मितवदनः शशिबुधयोर्धर्मरुचिः[11] स्याद्विशिष्टगुणः ॥ ९ ॥

---

१ सुसमदृक्. २ परिपूर्णः सिंहग्रीवो भवेदुभयचर्याम्. ३ कूटकृत् प्रलब्धुचित्तः. ४ निष्ठो. ५ सुबुद्धिमान्. ६ चरभे. ७ जनः. ८ स्वकर्म. ९ सिद्धः. १० वेदनाप्तदाह. ११ रतिः.

दृढसौहृदो विनीतः स्वबन्धुसंमानं[1]वर्धनेशश्च ।
गुर्विन्द्वोः शुभशीलः सुरद्विजेभ्यो रतो[2] भवेत्पुरुषः ॥ १० ॥

स्रग्धौतां[3]बरयुक्तः क्रियाविधिज्ञः कुलप्रियो[4]ऽत्यलसः ।
क्रयविक्रयेषु कुशलः शशिभार्गवयोः सदा योगे ॥ ११ ॥

जीर्णवधू[5]जनरमणो गजाश्वसम्पादको[6] विगतशीलः ।
वश्यो विधनः पुरुषः पराजितः स्याच्छशाङ्कशनियोगे ॥ १२ ॥

स्त्रीदुर्भगोऽल्पवित्तः सुवर्णलोहप्रकारकः स्थपतिः ।
दुष्टस्त्रीविधवानां कुजबुधयोरौषधक्रियानिपुणः ॥ १३ ॥

शिल्प[7]श्रुतिशास्त्रज्ञो मेधावी वाग्विशारदो मतिमान् ।
अस्त्रप्रियप्रधानः सुरगुरुकुजयोः समागतयोः ॥ १४ ॥

पूज्यो गणप्रधानो गणितज्ञः परयुवतिभी[9] रतो धूर्तः ।
द्यूतानृतशाठ्यरतो विटश्च[10] सितरुधिरसंयोगे[8] ॥ १५ ॥

धात्विन्द्रजालकुशलः प्रवञ्चकस्तेयकर्म[11]कुशलश्च ।
कुजसौरयोर्विधर्मः शस्त्रविषज्ञः कलिरुचिः स्यात् ॥ १६ ॥

नृत्तविधेर्विज्ञाता प्राज्ञोऽपि च गेयशास्त्र[12]विन्मनुजः ।
बुधगुरुयोगे मतिमान् सौख्ययुतो जायतेऽवश्यम् ॥ १७ ॥

अतिशयधनो नयज्ञो बहुशिल्पो वेदवित्सुवाक्यः स्यात् ।
गीतज्ञो हास्यरतिर्बुधसितयोर्गन्धमाल्यरुचिः ॥ १८ ॥

ऋणवान्[13] डम्भ[14]प्रायः प्रपञ्चकः सत्कविर्गमनशीलः ।
निपुणः शोभनवाक्यो बुधशनियोगे पुमान् भवति ॥ १९ ॥

जीवति विद्यावादै[15]र्विशिष्टधर्मस्थितः प्रमाणयुतः ।
जीवसितयोर्मनुष्यो विशिष्टदारो भवेन्मतिमान्[16] ॥ २० ॥

शूरो वित्तसमृद्धो नगराधिपतिर्यशस्वी[17] च ।
शनिजीवयोः प्रधानः श्रेणिसभाग्रामसंघानाम् ॥ २१ ॥

---

१ संमानकृद्धनेशश्च. २ हितो. ३ धूपां. ४ कवि. ५ वधूनां. ६ सम्पालको. ७ शिल्पी. ८ योगे. ९ युवतिको. १० विटः सिते रुधिरसंयुते भवति. ११ प्रपञ्चकस्तोयकर्म. १२ वाद्य. १३ गुणवान्. १४ दम्भ. १५ वेदै. १६ भवेद्धनवान्. १७ नगराधिपतिः सुखी यशस्वी च.

दारुविदारणदक्षः क्षुरचित्राश्मादिकर्मशिल्पी च ।
मल्लोऽटनः पशुपतिः शनिसितयोगे पुमान् भवति ॥ २२ ॥
उक्तं फलं गगनगा यद्यन्योन्यगणस्थिताः ।
अधमादि विकल्पेन कुर्वन्ति विकृतिं तथा ॥ २३ ॥

इति कल्याणवर्मविरचितायां सारावल्यां
द्विग्रहयोगो नाम पञ्चदशोऽध्यायः ॥

## षोडशोऽध्यायः ।

निर्लज्जः पापरतो यन्त्रज्ञः शत्रुदारणे शूरः ।
[1]अश्मक्रियासु कुशलः सहस्थितैः सूर्यशशिभौमैः ॥ १ ॥
तेजस्वी निपुणमतिः शास्त्रकलागोष्ठिपानरतः ।
नृपकृत्य[2]करो धीरो रविशशिशशिजैः सहैकस्थैः ॥ २ ॥
क्रुद्धो मायानिपुणः सेवाकुशलो विदेशगमनरतः ।
मेधावी चपलमतिः सहस्थितैरर्कशशिजीवैः ॥ ३ ॥
परधनहरणे निपुणः परदाररतश्च शास्त्रनिपुणश्च ।
रविचन्द्रदैत्यपूज्यैरेकस्थैर्जायते मनुजः ॥ ४ ॥
[3]कामे विवादकुशलो मूर्खः परतन्त्रगो दरिद्रश्च ।
सूर्यनिशाकररविजैरेकस्थैर्जायते मनुजः ॥ ५ ॥
भवति ख्यातो मल्लः साहसिको निष्ठुरो विगतलज्जः ।
धनसुतकलत्ररहितः सहस्थितैरर्ककुजसौम्यैः ॥ ६ ॥
वचसि निपुणो महार्थः क्षितिपतिमन्त्री [4]च भूपतिर्वाऽपि ।
सत्यवचनः प्रचण्डः सहस्थितैर्भौमगुरुसूर्यैः ॥ ७ ॥
नयनातुरः कुलीनः सुभगो वाक्शल्यसंयुतो मनुजः ।
भृगुभौमदिवसनाथैः सहस्थितैः स्याद्विभवयुक्तः ॥ ८ ॥
विकलाङ्गो धनरहितो नित्यं रोगान्वितो मनुजः ।
स्वजनरहितोऽतिमूर्खः क्षितिजार्कजभानुभिः सहितैः ॥९॥
नेत्रातुरोऽतिधनवान् [5]मूर्खः शास्त्रादिशिल्पकाव्यरतः ।
वाचस्पतिबुधसूर्यैरेकगतैर्लिपिकरः पुरुषः ॥ १० ॥

---

१ अखिल. २ रतो. ३ कामविवादे. ४ चमूपतिः. ५ शास्त्रकथाकाव्यगोष्ठिशिल्परतः.

[1]अतितप्तो वाचाटो भ्रमणरुचिः प्रोषितो गुरुभिः ।
स्त्रीहेतोः सन्तप्तः शशिसुतरविभार्गवैः सहितैः ॥ ११ ॥
क्लीबाचारो द्वेष्यः सर्वजितो बन्धुभिः परित्यक्तः ।
सौरादित्येन्दुसुतैरेकस्थैर्जायते पुरुषः ॥ १२ ॥
दुर्बलचक्षुः शूरः प्राज्ञो निःस्वश्च भूपतेः सचिवः ।
परकार्यरतो नित्यं भार्गवगुरुभास्करैः सहितैः ॥ १३ ॥
असदृशकायः पूज्यः स्वजनद्वेष्यः सुदारसुतमित्रः ।
नृपतीष्टो विगतभयो जीवार्कजदिनकरैः सहितैः ॥ १४ ॥
शत्रुभयात् सोद्वेगो मानकलाकाव्यवर्जितो मनुजः ।
कुत्सितचरितः कुष्ठी सितार्किरविसंयुतैर्भवति ॥ १५ ॥
पापकरा जायन्ते नीचाचाराः सुहृत् स्वजनहीनाः ।
आजीविनश्च पुरुषाः शशाङ्कबुधभूमिजैः सहितैः ॥ १६ ॥
[2]विनताङ्गः स्त्रीलोलश्चोरः कान्तश्च संमतः स्त्रीणाम् ।
भौमशशाङ्कसुरेज्यैरेकस्थैश्चण्डरोषश्च ॥ १७ ॥
दुःशीलायाः पुत्रः पतिश्च तस्याः सदैव निर्दिष्टः ।
कुजभृगुशशिभिः सहितैर्भ्रमणरुचिः शीत[3]भीतश्च ॥ १८ ॥
बाल्ये मृतजननीकः क्षुद्रो विषमश्च लोकविद्विष्टः ।
जायेत नरो योगे भूसुतशशिभास्करसुतानाम् ॥ १९ ॥
धनवान् कल्यो वाग्मी तेजस्वी ख्यातिमान्विपुलकीर्तिः ।
बहुपुत्रभ्रातृयुतो बुधेन्दुसुरपूजितैर्युक्तैः ॥ २० ॥
विद्यासंस्कृतमतिरपि नीचाचारः पुमान् भवेज्जातः ।
[4]सौम्यो धनप्रलुब्धो बुधभार्गवचन्द्रसंयोगे ॥ २१ ॥
[5]अस्वस्थो विकलाङ्गः प्राज्ञो वाग्मी सुपूजितः क्षितिपः ।
भवति नरः संयोगे सौरेन्दुशशाङ्कपुत्राणाम् ॥ २२ ॥
साध्वीतनयः प्राज्ञः कलास्वभिज्ञो बहुश्रुतः साधुः ।
भार्गवगुरुशशियोगे जातः सुभगो भवेत् पुरुषः ॥ २३ ॥
शास्त्रार्थतत्त्वबुद्धिर्वृद्धस्त्रीसङ्गतो विगत[6]रोगः ।
शशिवाचस्पतिसौरैरेकस्थैर्ग्रामबृन्दपतिः ॥ २४ ॥

---

१ अभिशस्तो. २ व्रणिताङ्गः. ३ भीरुश्च. ४ सेर्ष्यो. ५अस्वातन्त्र्यो विकलः. ६ रोषः.

लिपिकरपुस्तकवाचकपुरोधसां भवति जन्मसुकृतैश्च ।
दैवविदां पुरुषाणां शशिभार्गवसौरिसंयोगे ॥ २५ ॥
सुकविः क्षोणीनाथः सद्युवतिपतिः परार्थ उद्युक्तः ।
गान्धर्ववेदकुशलः स्याद्बुधगुरुभूसुतैः सहितैः ॥ २६ ॥
अकुलीनो विकलाङ्गश्चपलो दुष्टश्च जायते मनुजः ।
मुखरो नित्योत्साही कुजबुधभृगुनन्दनैः सहितैः ॥ २७ ॥
प्रेष्यः श्यामलनेत्रः प्रवासशीलो भवेद्दनरोगी ।
रमते प्रहसनशीलैर्बुधार्किरुधिरैः सहैकस्थैः ॥ २८ ॥
नृपतीष्टः सत्सुतवान् विलासिनीभ्यः सदाप्तबहुसौख्यः ।
सकलजनानन्दकरो भार्गवगुरुभूमिजैः सहितैः ॥ २९ ॥
नृपसंमतः क्षताङ्गो नीचाचारो विगर्हितो मित्रैः ।
भवति नरो विगतघृणः सुरेज्यकुजसौरिसंयोगे ॥ ३० ॥
चारित्रविहीनायाः पुत्रो भर्ता भवेत् सुखविहीनः ।
नित्यं प्रवासशीलः संयुक्तैः सौरिकुजशुक्रैः ॥ ३१ ॥
सुतनुः क्षपितारिगणो नृपतिः सुभगस्तथा पृ[1]थुलकीर्तिः ।
बुधगुरुशुक्रैः सहितैर्भवति नरः सत्यवचनश्च ॥ ३२ ॥
[2]स्थानधनैश्वर्ययुतं प्राज्ञं बहुभोगिनं स्वदाररतम् ।
धृतिसौख्यर[3]तं सुभगं जनयन्ति बुधार्कजीवाख्याः ॥ ३३ ॥
मुखरो धूर्तोऽनृतवाक् परयुवतिरतो भवेद्विषमशीलः ।
बुधशुक्रसूर्यतनयैः कलास्वभिज्ञः स्वदेशरतः ॥ ३४ ॥
न्यूने कुलेऽपि जातो भवति नरो भूपतिर्विपुलकीर्तिः ।
गुरुभार्गवदिनकरजैरेकस्थैः शीलसम्पन्नः ॥ ३५ ॥
पापैर्युक्ते चन्द्रे मातुरभावः प्रकीर्तितप्रायः ।
सूर्ये पितुस्तथान्यैः शुभं वदेन्मिश्रितैर्मिश्रम् ॥ ३६ ॥
प्रायः शुभाः समेता धनभूतियशोन्वितं नृपतिचेष्टम् ।
उत्पादयन्ति मनुजं भूमण्डलमण्डनं श्रेष्ठम् ॥ ३७ ॥

---

:. २ मान. ३ युतं.

पापास्त्रयोऽपि मिलिताः कुर्वन्ति नरं सुदुर्भगं लोके ।
दारिद्र्यदुःखतप्तं गर्हितरूपं विनयहीनम् ॥ ३८ ॥

इति कल्याणवर्मविरचितायां सारावल्यां त्रिग्रहयोगो नाम षोडशोऽध्यायः ॥

## सप्तदशोऽध्यायः ।

लिपिकरतस्करमुखरो रोगी मायाप्रपञ्चकुशलश्च ।
बुधरविभौमशशाङ्कैरेकर्क्षगतैः पुमान् भवति ॥ १ ॥
धनवान्वनितानिन्द्यस्तेजस्वी नीतिमान् विगतशोकः ।
कर्मसमर्थो निपुणः शशिकुजगुरुभास्करैः सहितैः ॥ २ ॥
आर्योचितवाग्वृत्तिः सुखभाङ् निपुणोऽर्थसंग्रहणशीलः ।
विद्यासुतदारयुतः शशिकुजभृगुभास्करैः सहितैः ॥ ३ ॥
विषमशरीरो ह्रस्वो धनरहितो याचिताशनो मूर्खः ।
गम्यः सर्वस्य तथा रविशशिकुजसौरिसंयोगे ॥ ४ ॥
सौवर्णिकः प्लुताक्षः शिल्पकरो वा महाधनो धीरः ।
जातस्यान्निरुजतनुः शशिज्ञगुरुभास्करैः सहितैः ॥ ५ ॥
विकलः सुभगो वाग्मी ह्रस्वो नृपसम्मतो मनुजः ।
जातः स्यादेकस्थै रविशशिबुधभार्गवैः सहितैः ॥ ६ ॥
मातृपितृविप्रयुक्तो धनसौख्यविवर्जितो भ्रमणशीलः ।
भिक्षाशनोऽप्यनृतवाक् रवीन्दुसौम्यार्किभिर्नियतम् ॥ ७ ॥
सलिलमृगारण्यानां स्वामी स्यात्सौख्यभाक् भवति पूज्यः ।
शुक्रार्कगुरुशशाङ्कैरेकर्क्षगतैः पुमान् निपुणः ॥ ८ ॥
तामसनेत्रस्तीक्ष्णो बहुसुतवित्तो वराङ्गनासुभगः ।
सूर्येज्यचन्द्रसौरैरेकस्थैर्जायते पुरुषः ॥ ९ ॥
वनितासदृशाचारः पुरःसरोऽत्यन्तदुर्बलशरीरः ।
भीरुः सर्वत्र भवेदर्केन्दुसितासितैः सहितैः ॥ १० ॥
शूरोऽथ सूत्रकारश्चक्रधरो वा विपन्नदारधनः ।
दुःखार्णवोऽटनपरः सुसङ्गतैरर्कजीवबुधभौमैः ॥ ११ ॥

---

१ उग्रो हुतभुक्तीव्रः. २ सौवर्णकः. ३ वीरः. ४ गाम्भीर्यो रुचिर. ५ त्रस्ताक्षो भूपसंमतो, पिङ्गाक्षो भूपसंमतो. ६ नृपतिपूज्यः. ७ चरो.

परदाररतश्चोरो विषमाङ्गो दुर्जनो विगतसत्त्वः ।
भवति प्रसवे पुरुषो रविसितभौमेन्दुजैः सहितैः ॥ १२ ॥
योद्धा[1] प्राज्ञस्तीक्ष्णो नीचाचारः कविप्रधानश्च ।
मन्त्री च भूपतिर्वा बुधार्ककुजसौरिसंयोगे ॥ १३ ॥
सुभगः पूज्यो लोके धनवान् नृपसंमतो भुवि ख्यातः ।
रविभौमजीवशुक्रैरेकस्थैर्नीतिमान् पुरुषः ॥ १४ ॥
सोन्मादो गणमान्यः सिद्धार्थो बन्धुमित्रसंपृक्तः ।
भानुकुजजीवसौरैः संयुक्तैर्वा नृपाभिमतः ॥ १५ ॥
विकलो नीचाचारो विषमाक्षो बन्धुविद्विष्टः ।
सूर्यकुजशुक्रसौरैः पराभवं सर्वतो याति ॥ १६ ॥
धनवान् सुखप्रधानः सिद्धार्थो बन्धुमान् प्रकृष्टश्च ।
भानुबुधजीवशुक्रैर्भवति पुमानेकराशिगतैः ॥ १७ ॥
क्लीबाचारो मानी कलहरुचिः सहजवाङ् निरुत्साहः ।
अर्कार्किबुधसुरेज्यैरेकस्थैर्जायते पुरुषः ॥ १८ ॥
मुखरः सुभगः प्राज्ञो मृदुसौख्यः सत्वशौचसम्पन्नः ।
धीरो मित्रसहायो रविबुधसितसौरिसंयोगे ॥ १९ ॥
लुब्धः कविः प्रधानः कारुकनाथोऽधिपश्च नीचानाम् ।
आदित्यार्किसितार्यैं राज्ञां जातो भवेदिष्टः ॥ २० ॥
शास्त्रकुशलो नरेन्द्रः सुमहामन्त्रोऽथवा महाबुद्धिः ।
शशिकुजसोमजजीवैरेकस्थैर्यः पुमान् जातः ॥ २१ ॥
कलहरुचिर्निद्रालुर्नीचः स्याद्वर्धकीपतिः सुभगः ।
बन्धुद्वेष्टा न सुखी शशिकुजबुधभार्गवैः सहितैः ॥ २२ ॥
शूरो विमातृपितृको दुष्कुलजो बहुकलत्रमित्रसुतः ।
भवति सुकर्माभिरतः शशिकुजबुधसौरिसंयोगे ॥ २३ ॥
विकालज्ञः सुकलत्रः सकलसहोऽतीव मानसंयुक्तः ।
प्राज्ञो बहुमित्रसुखः शशिकुजगुरुभार्गवैः सहितैः ॥ २४ ॥
बधिरो धनवान् शूरः सोन्मादो वाक्पटुः स्थिरप्रकृतिः ।
मतिमानुदारचित्तो भौमेन्दुशनैश्चरसुरेज्यैः ॥ २५ ॥

---

१ योधः.

कुलटापतिः प्रगल्भः सर्पाक्षो नित्यमेव सोद्वेगः ।
जातः पुरुषोऽवश्यं कुजेन्दुयमभार्गवैर्भवति ॥ २६ ॥
विद्वान् विमातृपितृकः सद्रूपो धनयुतोऽतिसुभगश्च ।
भवति नरो विगतारिर्बुधगुरुशशिभार्गवैः सहितैः ॥ २७ ॥
कृतधर्मकीर्तिरग्र्यस्तेजस्वी बन्धुवल्लभो मतिमान् ।
नृपसचिवः प्रवरकविः शशिबुधजीवार्किभिः सहितैः ॥२८॥
परदारगमनशीलो विशीलभार्यो विपन्नबन्धुश्च ।
प्राज्ञो लोकद्विष्टः[1] स्यादिन्दुबुधार्किभृगुपुत्रैः ॥ २९ ॥
मात्रा रहितः सुभगस्त्वग्दोषी दुःखितो भ्रमणशीलः ।
बहुभाषी सत्यरतः शशिगुरुभृगुसौरिभिः सहितैः ॥ ३० ॥
स्त्रीकलहरुचिर्धनभाक् पूज्यो लोके च शीलसम्पन्नः ।
भवति पुमान् नि[2]रुजतनुर्बुधारगुरुभार्गवैः सहितैः ॥ ३१ ॥
शूरो विद्वान् वाग्मी धनरहितः सत्यशौचसम्पन्नः ।
वादी द्वन्द्वसहिष्णुर्मतिमान् सहितैर्बुधारगुरुसौरैः ॥ ३२ ॥
स्यान्मल्लः परपुष्टः कठिनाङ्गो युद्धदुर्मदः ख्यातः ।
रमते च सारमेयैर्बुधारयमभार्गवैः सहितैः ॥ ३३ ॥
तेजस्वी वित्तयुतः स्त्रीलोलः साहसप्रियश्चपलः ।
भौमगुरुशुक्रसौरैरेकस्थैर्जायते कितवः ॥ ३४ ॥
मेधावी श्रा[3]द्धरतो रा[4]मासक्तो विधेयभृत्यश्च ।
बुधजीवशुक्रसौरैरेकस्थैस्तीव्रसंयोगे ॥ ३५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां चतुर्ग्रहयोगाध्यायः सप्तदशः ॥

## अष्टदशोऽध्यायः ।

दुःखी बहुप्रपञ्चो जायाविरहेण तापितशरीरः ।
भवति पुमानेकस्थै रवीन्दुकुजजीवचन्द्रसुतैः ॥ १ ॥
परकर्मरतो नित्यं बन्धुसुहृद्भिः कृतो[5] विगतसत्वः ।
क्लीबैर्याति च सख्यं रवीन्दुकुजशुक्रसौम्यैश्च ॥ २ ॥

---

१ द्वेष्टा. २ रुचिर. ३ शस्त्र, शास्त्र. ४ कामाचारो. ५ बन्धुसुहृद्भिकृतो, बन्धुसुहृद्दुःखितो.

अल्पायुर्बन्धनभाग्दीनो भवतीह सर्वसुखहीनः ।
अकलत्रोऽसुतवित्तः सौरदिवाकरबुधेन्दुकुजैः ॥ ३ ॥
जात्यन्धो बहुदुःखी मातृपितृभ्यां सदैव सन्त्यक्तः ।
भवति नरो गेयरुचिः कुजेन्दुगुरुभार्गवार्कैश्च ॥ ४ ॥
युद्धकुशलः समर्थः परवित्तहरः परोपतापी च ।
पिशुनश्चलश्च पुरुषः शनिशशिकुजजीवदिवसेशैः ॥ ५ ॥
मानार्थविभवहीनो मलिनाचारः पराङ्गनातिरतः ।
पञ्चभिरेकस्थैः स्याद्दिनेशशशिशुक्रशनिभौमैः ॥ ६ ॥
यन्त्रज्ञो बहुविभवो नृपसचिवो दण्डनायको वा स्यात् ।
ख्यातः शुभकीर्तियुतो बुधेन्दुरविजीवशुक्रैश्च ॥ ७ ॥
भीरुः प्रियसन्त्यक्तः सोन्मादो वञ्चनासु निपुणश्च ।
उग्रः परान्नभोजी बुधेन्दुगुरुसूर्यरविपुत्रैः ॥ ८ ॥
दीर्घो रोमशगात्रो मरणोत्साही सुखार्थसुतहीनः ।
स्यात्पञ्चभिरेकस्थै रविचन्द्रबुधार्किभृगुपुत्रैः ॥ ९ ॥
वाग्मीन्द्रजालनिरतश्चलचित्तः स्त्रीषु वल्लभो मतिमान् ।
बहुशत्रुर्विगतभयो रवीन्दुगुरुशुक्रभानुसुतैः ॥ १० ॥
कामी बहुतुरगनरः स्वीकृतसेनापतिर्विगतशोकः ।
राजप्रियोऽतिसुभगो बुधाररविजीवशुक्रैः स्यात् ॥ ११ ॥
नित्योद्विग्नो रोगी भिक्षां भुङ्क्ते गृहाद्गृहं गत्वा ।
जीर्णमलीमसवासा रविकुजबुधजीवरविपुत्रैः ॥ १२ ॥
वधबन्धनरोगार्तो विद्वाँल्लोके सुपूजितो भवति ।
निःस्वो विकलशरीरः कुजशशिबुधशुक्रमन्दैः स्यात् ॥१३॥
व्याधिभिररिभिर्ग्रस्तः स्थानभ्रष्टोऽतिदुःखसन्तप्तः ।
भ्रमति क्षुभितः पुरुषः कुजार्किरविशुक्रशशितनयैः ॥१४॥
प्रेष्यो मूर्खः क्लीबो मलिनाचारोऽतिदुर्भगो विकलः ।
भवति नरो धनरहितः शशिकुजगुरुशुक्ररवितनयैः ॥ १५॥
जलयन्त्रधातुपारदरसायनेष्वतिपटुः पुमान् भवति ।
एभिः प्रसिद्धकर्मा क्षितिसुतरविजीवसितसौरैः ॥ १६ ॥

---

क्रीतःसेनापतिः.

बहुशास्त्रज्ञानपटुर्मित्रहितः संमतो गुरूणां च ।
धर्मपरः कारुणिकः सूर्यासितशुक्रबुधजीवैः ॥ १७ ॥
साधुः कल्यशरीरो विद्याधनसत्यसौख्यसम्पन्नः ।
बन्धुहितो बहुमित्रो बुधेन्दुकुजजीवभृगुपुत्रैः ॥ १८ ॥
तिमिरामयी दरिद्रः परान्नमभियाचते सदा दीनः ।
मलिनयति बन्धुवर्गं कुजार्किबुधजीवहिमकिरणैः ॥ १९ ॥
बहुशत्रुमित्रपक्षः परार्थहितकृद्विषमशीलः ।
एकस्थैरतिमानी बुधेन्दुकुजशुक्ररविपुत्रैः ॥ २० ॥
नृपमन्त्री नृपतिसमो गणनाथः सर्वलोकपूज्यश्च ।
एकर्क्षे भवति नरश्चन्द्रेन्दुजजीवशनिशुक्रैः ॥ २१ ॥
सुमनस्कः सोन्मादो राज्ञामतिवल्लभो विगतशोकः ।
निद्रातुरो दरिद्रः कुजगुरुबुधशुक्ररविपुत्रैः ॥ २२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां पञ्चग्रहयोगो नामाष्टादशोऽध्यायः ॥

## एकोनविंशोऽध्यायः ।

विद्याधनधर्मरतः क्षामो बहुभाषको विकृष्टमतिः ।
एकभवनोपयातैर्बुधेन्दुरव्यारगुरुशुक्रैः ॥ १ ॥
दाता परकार्यकरश्चलस्वभावो विशुद्धसत्वश्च ।
रमते विजनोद्देशे रवीन्दुवक्रज्ञगुरुरविजैः ॥ २ ॥
चोरः परदाररतः कुष्ठी स्वजनैर्निराकृतो मूर्खः ।
स्थानभ्रष्टो विसुतो बुधेन्दुरव्यारशनिशुक्रैः ॥ ३ ॥
नीचः परकर्मरतः क्षयरोगी श्वासकासपरिभूतः ।
निन्द्यः स्याद्बन्धूनां सितेन्दुरव्यारगुरुरविजैः ॥ ४ ॥
मन्त्री नृपस्य सुभगः क्षान्तियुतो भवति शोकपरितप्तः ।
अकलत्रो धनरहितो रवीन्दुबुधजीवसितसौरैः ॥ ५ ॥
तीर्थेषु सदा रमते पुत्रैर्नित्यं धनेन रहितश्च ।
वनपर्वतोपसेवी बुधाररविजीवशनिशुक्रैः ॥ ६ ॥

नित्यं शुचिः प्रतापी बहुयुवतिरतो नृपप्रियो मन्त्री ।
धनसुतसौभाग्ययुतः कुजार्किसितचन्द्रबुधजीवैः ॥ ७ ॥
प्रायो दरिद्रदुःखी मूर्खः षट्पञ्चसंयुतैर्विहगैः ।
अन्योन्यदर्शनादपि फलमेतत्कन्दलाः प्राहुः ॥ ८ ॥

इति कल्याणवर्मविरचितायां सारावल्यां षट्ग्रहयोगो नामैकोनविंशोऽध्यायः ॥

---

# विंशोऽध्यायः ।

योगा विभक्ताश्चतुरादिसंस्थैर्व्यासाद्ग्रहैः कैरपि तापसानाम् ।
जन्मादि[1] तेषामपरैर्मुनीन्द्रैः संवेदितं तत्कथयाम्यशेषात् ॥ १ ॥
सूर्येन्दुशुक्रार्यमहीसुतेषु सूर्येन्दुसोमात्मजभूमिजेषु ।
एकस्थितेषु प्रभवेत्तपस्वी भान्वारमन्दज्ञसितेषु चैव ॥ २ ॥
कुजेन्दुसूर्यज्ञपुरोहितैश्च तीक्ष्णांशुचन्द्रार्किशशाङ्कजैश्च ।
सूर्येन्दुभूपुत्रशनैश्चरैः स्यादेकर्क्षगैः प्रव्रजितो मनुष्यः ॥ ३ ॥
आदित्यगुर्वार्किशशाङ्कपुत्रा भौमार्कचन्द्रात्मजसूरयश्च[2] ।
एकर्क्षसंस्थास्तपसि स्थितानां कुर्वन्ति जन्मप्रसवे ग्रहेन्द्राः॥४॥
सितार्कभौमार्कसुता महाबलाः सुरेज्यभूपुत्रकसौरसूरयः ।
कुजेन्दुवागीशशनैश्चरा इमे समं गता वै जनयन्ति तापसम् ॥५॥
कुजार्किसोमात्मजदेववन्दितैः कुजार्किचन्द्रात्मजसूर्यभार्गवैः ।
रवीन्दुभौमासितदानवप्रियैर्भवन्ति सूता व्रतसंयुता नराः ॥६॥
सितारसूर्यात्मजजीवभास्करैः कुजेन्दुदेवेज्यबुधार्कनन्दनैः ।
सितेन्दुपुत्रार्किशशाङ्कभूमिजैर्भवेत्तपस्वी वनपर्वताश्रयः ॥ ७ ॥
चन्द्रेन्दुपुत्रारसुरेज्यभास्करैः शशाङ्कसूर्येन्दुजशुक्रभूमिजैः ।
स्थितैरमीभिः सहितैर्नृसम्भवाः भवन्ति वन्द्या मुनयोऽत्र दूषकाः८
रवीन्दुभौमेन्दुजजीवभार्गवैः शशाङ्कभौमार्किबुधेज्यभास्करैः ।
कुजेन्दुसूर्यार्किसितेन्दुसम्भवैर्भवेदमीभिः सहितैर्नरो व्रती ॥ ९ ॥
सितेन्दुजीवार्कजसूर्यलोहितैः सितार्कभौमार्किशशाङ्कसोमजैः ।
एकत्रयातैर्गगनेचरैः सदा भवन्ति जाता मुनयो यशस्विनः ॥१०॥

---

१ जन्माहैतैषां. २ सौरयश्च.

कुजज्ञवागीशसितार्किभास्करैः सितार्किजीवेन्दुजचन्द्रभूमिजैः ।
बलप्रधानैः सहितैर्विहङ्गमैर्व्रजेत्प्रजातः पुरुषस्तपस्विताम् ॥ ११ ॥
रवीन्दुवागीशशनैश्चरैश्च शनैश्चरेन्द्वर्कसितैरवश्यम् ।
रवीन्दुपुत्रक्षितिजेन्द्रपूज्यैस्तपस्विनः स्युः फलमूलभक्षिणः ॥ १२ ॥
वक्रार्कसोमात्मजदानवेड्या भौमेन्दुवागीशशशाङ्कपुत्राः ।
एकर्क्षगा जन्मनि यस्य जन्तोर्भवेद्व्रती वल्कलचीरधारी ॥ १३ ॥
शशीन्दुपुत्रक्षितिजार्कपुत्रा बुधक्षमापुत्रसुरेड्यसौराः ।
एकर्क्षगा जन्मनि यस्य सूतौ कुर्वन्ति तं तापसमेव शान्तम् ॥१४॥

चन्द्रार्कभार्गवशशाङ्कसुता बलस्था
भौमेन्दुपुत्रसितभास्करनन्दनाश्च ।
मन्देन्दुवाक्पतिसिता नियतं यतीनां
कुर्वन्ति जन्म फलपाककृताशनानाम् ॥ १५ ॥
रविकुजशशिशुक्रैश्चन्द्रभौमज्ञसूर्यै-
र्गुरुसितरविमन्दैः शुक्रजीवेन्दुवक्रैः ।
कुजबुधसितचन्द्रैरेभिरेकर्क्षयातै-
र्भवति गिरिवनौकास्तापसः सर्ववन्द्यः ॥ १६ ॥

सितशशिकुजगुरुमन्दैश्चन्द्रेन्दुजभौमदेवगुरुशुक्रैः ।
रविशशिकुजबुधजीवैर्भवति यतिर्दुःखितो दीनः ॥ १७ ॥
कुजार्किदेवेड्यसितेन्दुपुत्रैः शनीनसोमात्मजचन्द्रभौमैः ।
समं गतैः स्युः सबलैर्यथोक्तैर्जटाधरा वल्कलधारिणश्च ॥१८॥

भान्विन्दुजेन्दुकुजजीवसुरारिपूज्यैः
सूर्येन्दुभौमगुरुशुक्रशनैश्चरैश्च ।
प्राप्नोत्यवश्यमिह तापसरूपमेभिः
एकर्क्षगैर्गगनवासिभिरेव जातः ॥ १९ ॥
प्रव्रज्येशे दिनकरगते भुक्तिमन्तोऽतिशक्ताः
प्रव्रज्यायाः सुबलसहितैः स्थैर्यमाहुर्ग्रहेन्द्रैः ।
सम्पूर्णानां वशमनुगतैः प्रच्युतैस्तैर्बहुत्वे
वीर्योपेतैर्भवति बहुभिः सद्बलस्यानुपूर्व्याम् ॥ २० ॥

---

१ दिनकरगतैर्भक्तिमन्तो न शक्ताः २ वधमुपगतैः ३

प्रव्रज्यायाः स्वामी रविसुषिततनुर्निरीक्षितो वाऽन्यैः ।
याचितदीक्षा भवति च यवनाधिपतेर्यथा वाक्यम् ॥२१॥
शशीदृगाणे रविजस्य संस्थितः कुजार्किदृष्टः प्रकरोति तापसम् ।
कुजांशके वा रविजेन दृष्टो नवांशतुल्यं कथयन्ति तत्पुनः ॥२२॥
जन्माधिपः सूर्यसुतेन दृष्टः शेषैरदृष्टः पुरुषस्य सूतौ ।
आत्मीयदीक्षां कुरुते ह्यवश्यं पूर्वोक्तमत्रापि विचारणीयम्॥२३॥
जन्मपतिर्विकलाङ्गः पश्यति सौरिं चतुष्टये प्रबलम् ।
यस्य स भाग्यविहीनः प्रव्रज्यां प्राप्नुयात् पुरुषः ॥ २४ ॥
गुरुहिमगुरवीणामेक एवोदयस्थो
गगनतलगतो वा रिःफगश्चाल्पमूर्तिः ।
अविकलबलभाजा सूर्यपुत्रेण दृष्टो
जनयति खलु जातं तापसं दुःखभाजम् ॥ २५ ॥
कुमुदवनसुबन्धुं सौम्यभागे बलस्थं
वियति गमनशीलान् स्वोच्चभस्थांश्च शेषान् ।
यदि दिनकरपुत्रः पश्यति प्राप्तवीर्यो
भवति भुवननाथो दीक्षितश्च स्वतन्त्रः ॥ २६ ॥
अतिशयबलयुक्तः शीतगुः शुक्लपक्षे
बलविरहितरिक्तं प्रेक्षते लग्ननाथम् ।
यदि भवति तपस्वी दुःखितः शोकतप्तो
धनजनपरिहीनः कृच्छ्रलब्धान्नपानः ॥ २७ ॥
सौरिः शुभभागस्थः पश्यति चन्द्रं ग्रहांस्तथैवान्यान् ।
कुम्भांशेषु प्राप्तान् जनयति दीक्षान्वितं पुरुषम् ॥ २८ ॥
एकर्क्षगतैः सर्वैर्जन्माधिपतिर्निरीक्षितो यस्य ।
दीक्षा तस्यावश्यं भवतीति पुरातनैः कथितम् ॥ २९ ॥
अग्नीनां परिचारका गिरिनदीतीराश्रमे तापसाः
सूर्याराधनतत्परा गणपतेर्भक्ता उमायाश्च ये ।
गायत्रीं जपतां वने नियमिनां गङ्गाभिषेकार्थिनां
कौमारव्रतमिच्छतामधिपतिस्तेषां सदा भास्करः ॥३०॥

---

१ रुचि. २ कुजार्क. ३ तं पुनः. ४ विपुलांगः. ५ तुङ्गांशेषु.

वृद्धश्रावकभस्मधूलिधवलाः शैवव्रते ये स्थिता-
वाह्याः पातकितां गता भगवतीभक्ताश्च निःसङ्गिनः ।
सिद्धान्ते खलु सोमनाम्नि निरताः कापालिका निष्ठुरा-
स्तेषां नायकतां गतः शशधरः खट्वाङ्गपाणिद्युतिः ॥ ३१ ॥
उपासका बुद्धसमाश्रयं गताः शिखां[1] गताः पाण्डरभिक्षवश्च ये ।
सुवाससो रक्तपटा जितेन्द्रियाःप्रभुः सदैषां क्षितिजः प्रकीर्तितः॥३२॥
आजीविनां कुहकिनां समयाधिका ये[2]
ये दीक्षितास्तनुभृतः खलु गारुडे च ।
तन्त्रे मयूरपिशिताशनयोश्च युक्ता-
स्तेषां शशाङ्कतनयोऽधिपतिर्निरुक्तः ॥ ३३ ॥
एकं त्रीनथवा वहन्ति मुनयो दण्डान् कषायाम्बरा
वानप्रस्थमुपागताः फलपयोभक्षाश्च ये भिक्षवः[3] ।
गार्हस्थ्येन तु संस्थिता नियमिनः सद्ब्रह्मचर्यं गता-
स्तेषां दण्डपतिः सुरेन्द्रसचिवस्तीर्थेषु ये स्नातकाः ॥३४॥
पाशुपतयज्ञदीक्षाव्रतेषु[4] ये नित्यमेव संयुक्ताः ।
वैष्णवचरकाणामपि तेषां नेता प्रकीर्तितः शुक्रः ॥ ३५ ॥
पाषण्डव्रतनिरता दिगम्बरा भिक्षवो ये च ।
तेषामधिपतिरार्किः श्रावकतरुमूलिनश्च दुस्तपसः ॥ ३६ ॥
प्रकथितमुनियोगे राजयोगो यदि स्यात्
अशुभफलविपाकं सर्वमुन्मूल्य पश्चात् ।
जनयति पृथिवीशं दीक्षितं साधुशीलं
प्रणतनृपशिरोभिः संस्पृष्टपादाब्जयुग्मम्[5] ॥ ३७ ॥

इति कल्याणवर्मविरचितायां सारावल्यां प्रव्रज्यायोगो नाम विंशोऽध्यायः ॥

## एकविंशोऽध्यायः ।

यवनाद्यैर्विस्तरतः कथिता योगास्तु नाभसा नाम्ना ।
अष्टादशशतगुणितास्तेषां द्वात्रिंशदिह वक्ष्ये ॥ १ ॥

---

१ शिखां विना. २ समयाधिकारे. ३ सद्भिक्षवः. ४ समये. ५ घृष्ट.

नौच्छत्रकूटकार्मुकशृङ्गाटकवज्रदामनीपाशाः ।
वीणासरोजमुसला वापीहलशरसमुद्रचक्राणि ॥ २ ॥
माला सर्पार्धेन्दू यवकेदारौ गदाविहगयूपाः ।
युगशकटशूलदण्डा रज्जुः शक्तिस्तथा नलो गोलः ॥ ३ ॥
सचराचरस्य जगतो योगैरेभिः प्रकीर्त्यते प्रसवः ।
आश्रयजातान् प्राहुर्मणिन्धा मुसलरज्जुनलयोगान् ॥ ४ ॥
गोलयुगशूलपाशा वीणाकेदारदामनीसंज्ञाः ।
सप्तैते संख्याख्याः पूर्वाचार्यैः समुद्दिष्टाः ॥ ५ ॥
द्वे चार्धयोगसंज्ञे भुजङ्गमाले पराशरेणोक्ते ।
आकृतिजाता विंशतिरपरैः कथिताश्च सावित्रे[1] ॥ ६ ॥
आश्रययोगे जाता अमिश्रिते सौख्यलाभगुणयुक्ताः ।
अन्योन्यमिश्रिताश्चेद्विगतफलाः स्युस्तदा योगाः ॥ ७ ॥
नन्दन्ति स्वैर्भाग्यैर्नृपलब्धधना नृपप्रियाः ख्याताः ।
प्रायेण सौख्ययुक्ताश्चाकृतियोगेषु ये जाताः ॥ ८ ॥
परभाग्यलब्धसौख्या धनभाग्यैरेव जीवितास्तेषाम्[2] ।
संख्यासंज्ञे जाता ये पुरुषाः सर्वतो विकलाः ॥ ९ ॥
क्वचित् स्वभाग्यैः क्वचिदेवमेवं क्वचित्पराद्रूपतितः फलं च ।
क्वचित्सुखं दुःखमतीव कष्टं समार्द्धयोगे पुरुषो लभेत॥१०॥
होरादिकण्टकेभ्यः सप्तर्क्षगतैः क्रमेण योगाः स्युः ।
नौच्छत्रकूटकार्मुकनिर्देशाः पूर्वयवनेन्द्रैः ॥ ११ ॥
लग्नादिकण्टकेभ्यश्चतुर्गृहावस्थितैर्ग्रहैर्योगाः ।
यूपशरशक्तिदण्डाः सत्याचार्यप्रिया नित्यम् ॥ १२ ॥
सप्तर्क्षगैर्ग्रहेन्द्रैः केन्द्रादन्यत्र कीर्तितोऽर्द्धशशी ।
केन्द्रप्रत्यासन्नैर्भवनद्वयगैर्गदा नाम ॥ १३ ॥
लग्नास्तगतैः सौम्यैः पापैः सुखकर्मगैर्भवति वज्रम् ।
विपरीतैर्यवयोगो मिश्रैः पद्मं बहिःस्थितैर्वाऽपि ॥ १४ ॥
होरास्तगतैः शकटं चतुर्थदशमाश्रितैर्भवेद्विहगः ।
उदयान्त्यगैस्त्रिकोणे हल इति शृङ्गाटकं सलग्ने तत् ॥१५॥

---

१ सावित्रैः. २ परभाग्यैरेव जीवितं तेषाम्.

राश्यन्तरितैर्लग्नात् षट्भवनगतैर्भवेच्चक्रम् ।
अर्थात्तथैव यातैश्चक्राकारो भवेज्जलधिः ॥ १६ ॥
इत्याकृतिजा एते विंशतिसंख्या मया समुद्दिष्टाः ।
आश्रयजातान् वक्ष्ये यथामतं वृद्धगार्ग्यस्य ॥ १७ ॥
उभयस्थिरचरसंस्थैः सर्वैर्नलमुसलरज्जवः क्रमशः ।
केन्द्रेषु सौम्यपापैर्माला सर्पश्च दलयोगौ ॥ १८ ॥
एकभवनादिसंस्थैः संख्याख्याः स्युर्यथाक्रमं योगाः ।
गोलयुगशूलसंज्ञाः केदारः पाशदामनीवीणाः ॥ १९ ॥
एतेषां फलयोगं कथयामि यथाक्रमं मुनिभिरुक्तम् ।
सर्वदशास्वपि फलदाः सकला एते बुधैश्चिन्त्याः ॥ २० ॥
सलिलोपजीवविभवाः बह्वायाख्यातकीर्तयो दृष्टाः ।
कृपणा बलिनो लुब्धा नौसम्भूताश्चलाः पुरुषाः ॥ २१ ॥
आनृतिककितवबन्धनपाला निष्किञ्चनाः शठाः क्रूराः ।
कूटसमुत्था नित्यं भवन्ति गिरिदुर्गवासिनो मनुजाः ॥२२॥
स्वजनाश्रयो दयावान् दाता नृपवल्लभः प्रकृष्टमतिः ।
प्रथमेऽन्त्ये वयसि नरःसुखभाग्ययुतःसितातपत्रःस्यात्॥२३॥
आनृतिकगुप्तिपालाश्चोराः कितवाश्च कानने निरताः ।
कार्मुकयोगे जाता भाग्यविहीना वयोमध्ये ॥ २४ ॥
सुभगाः सेनापतयः कान्तशरीरा नृपप्रिया बलिनः ।
मणिकनकभूषणयुता भवन्ति योगेऽर्द्धचन्द्राख्ये ॥ २५ ॥
आद्यन्तवयसि[1] सुखिताः शूराः सुभगा विरोगदेहाश्च ।
भाग्यविहीना वज्रे जाताः स्वजनैर्विरुद्धाश्च ॥ २६ ॥
व्रतनियममङ्गलपरा वयसो मध्ये सुखार्थसंयुक्ताः ।
दातारः स्थिरवित्ता यवयोगभवाः सदा पुरुषाः ॥ २७ ॥
स्फीतयशसो गुणाढ्याः स्थिरायुषो विपुलकीर्तयः कान्ताः ।
शुभयशसः पृथिवीशाः कमलभवा मानवा नित्यम् ॥ २८॥
निधिकरणे निपुणधियः स्थिरार्थसुखसंयुताः सुरूपाश्च[2] ।
नयनसुखसम्प्रहृष्टा वापीयोगे नरा जाताः ॥ २९ ॥

---

१ आद्यन्तवयःसुखिनः. २ सुतृष्णाश्च.

रोगार्त्ताः कुकलत्रा मूर्खाः शकटानुजीविनो निःस्वाः ।
स्वजनैर्मित्रैर्हीनाः शकटे जाता भवन्ति नराः ॥ ३० ॥
[1]श्रमणरुचयो निकृष्टा दूताः सुरतानुजीविनो धृष्टाः ।
कलहप्रियाश्च नित्यं विहगे योगे सदा जाताः ॥ ३१ ॥
सततं मानार्थपरा यज्वानः शास्त्र[2]योगकुशलाश्च ।
धनकनकरत्नसम्पत्संयुक्ता मानवा गदायान्तु ॥ ३२ ॥
प्रियकलहसमरसाहससुखिनो नृपतेः प्रियाः सुभगकान्ताः ।
आढ्या युवतिद्वेष्याः शृङ्गाटकसंभवा मनुजाः ॥ ३३ ॥
बह्वाशिनो दरिद्राः कृषीवला दुःखिताश्च सोद्वेगाः ।
बन्धुसुहृ[3]त्सन्त्यक्ताः प्रेष्याहलसंज्ञिते पुरुषाः ॥ ३४ ॥
प्रणताशेषनराधिपकिरीटरत्नप्रभाच्छुरितपादः ।
भवति नरेन्द्रो मनुजश्चक्रे यो जायते योगे ॥ ३५ ॥
बहुधनरत्नाः क्षितिपा भोगार्थयुता जनप्रियाश्चा[4]पि ।
उदधिसमुत्थाः पुरुषाः स्थिरचित्ताः सत्ववन्तश्च ॥ ३६ ॥
आत्मनि रक्षानिरतस्त्यागयुतो वित्तसौख्यसम्पन्नः ।
व्रतनियमसत्यनिरतो यूपे जातो विशिष्टश्च ॥ ३७ ॥
इषुकरणदस्युबन्धनमृगयावनसेवनेतिसोन्मादाः ।
हिंस्राः कुशिल्पनिरताः शरयोगे सम्प्रसूताः स्युः ॥ ३८ ॥
धनरहितविकलदुःखितनीचालसपेलवायुषः पुरुषाः ।
सङ्ग्रामयुद्धनिपुणाः शक्त्यां जाताः स्थिराः सुभगाः ॥ ३९ ॥
हतपुत्रदारनिःस्वाः सर्वजनैर्न्यक्कृताः स्वजनबा[6]ह्याः ।
दुःखितनीचाः प्रेष्या दण्डप्रभवा न[7]राः सततम् ॥ ४० ॥
नित्यं सुखप्रधाना वाहनवस्त्रार्थभोगसम्पन्नाः ।
कान्ताः सुबहुस्त्रीका मालायां सम्प्रसूताः स्युः ॥ ४१ ॥
विषमाः क्रूरा निःस्वा नित्यं दुःखार्दिताः सुदीनाश्च ।
पर[8]भुक्ताः पानरताः सर्पे जाता भवन्ति नराः ॥ ४२ ॥

---

१ नीचायोनिनिकृष्टाः. २ गेय. ३ सुहृद्भिस्त्यक्ताः. ४ स्वसशुभाः ५ काराः. ६ हीनाः. ७ भवन्ति नराः. ८ परभक्तपापनिरताः, परवेश्मभक्ष्यनिरताः.

अटनप्रियाः सुरूपाः परदेशेष्वर्थभागिनो मनुजाः ।
क्रूराः खलस्वभावाः रज्जुप्रभवाः सदा कथिताः ॥ ४३ ॥
मानधनज्ञानयुताः कर्मोद्युक्ता नृपप्रियाः ख्याताः ।
स्थिरचित्ता मुसलोत्था भवन्ति शूराः सदा पुरुषाः ॥ ४४॥
ऊनातिरिक्तदेहा धनसंचयभागिनोऽतिनिपुणाश्च ।
बन्धुहिताश्च सुरूपा नलयोगे सम्प्रसूयन्ते ॥ ४५ ॥
दारिद्र्यालस्ययुता विद्याज्ञामानवर्जिता मलिनाः ।
नित्यं दुःखितदीना गोले योगे भवन्ति नराः ॥ ४६ ॥
पाषण्डभागिनो वा धनरहिता वा बहिष्कृता लोके ।
सुतमानधर्मरहिता युगयोगे मानवा जाताः ॥ ४७ ॥
तीक्ष्णालसधनरहिता हिंस्राः सुबहिष्कृता महाशूराः ।
सङ्ग्रामलब्धशब्दाः शूले रौद्राः प्रजायन्ते ॥ ४८ ॥
सुबहूनामुपयोज्याः कृषीवलाः सत्यवादिनः सुखिताः ।
केदारे सम्भूताश्चलस्वभावा धनैर्युक्ताः ॥ ४९ ॥
पाशे बन्धनभाजः कार्योद्युक्ताः प्रपञ्चकाराश्च ।
बहुभाषिणो विशीला बहुभृत्याः सम्प्रसूताः स्युः ॥ ५० ॥
दामिन्यामुपकारी पशुगणयुक्तो धनेश्वरो मूढः ।
बहुसुतरत्नसमृद्धो धीरो विद्वान् प्रजातः स्यात् ॥ ५१ ॥
मित्रान्विताः सुवचसः शास्त्रपरा गेयवाद्यनिरताश्च ।
सुखभाजो बहुभृत्या वीणायां कीर्तिता मनुजाः ॥ ५२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां नाभसयोगो नामैकविंशोध्यायः ॥

## द्वाविंशोऽध्यायः ।

सर्वस्य सर्वकालं ग्रहराशिसमुद्भवं फलं यस्मात्[1] ।
कथयाम्यतः प्रयत्नात् शेषाचार्यान् समाश्रित्य ॥ १
शास्त्रार्थकृतिकलाभिः ख्यातो युद्धप्रियः प्रचण्डश्च ।
उद्युक्तो भ्रमणरुचिर्दृढास्थिबन्धः क्रिये श्रेष्ठः ॥ २ ।

१ यत्स्यात्.

साहसकर्माभिरतः पित्तासृग्व्याधिकान्तिसत्वयुतः ।
सूर्ये भवति नरेन्द्रः स्वतुङ्गराशौ नरो जातः ॥ ३ ॥
दानरतो बहुभृत्यो ललितो युवतिप्रियो मृदुशरीरः ।
कुजभवनगते सूर्ये चन्द्रेण निरीक्षिते भवति ॥ ४ ॥
सङ्ग्रामोत्कटवीर्यः क्रूरः संरक्तनेत्रकरचरणः ।
भौमगृहे कुजदृष्टे भानौ तेजोबलोपेतः ॥ ५ ॥
प्रेष्यः परकर्मरतो मन्दधनः सत्वहीनबहुदुःखः ।
भानौ बुधसंदृष्टे कुजभवने मलिनकायश्च ॥ ६ ॥
भूरिद्रविणो दाता नृपमन्त्री दण्डनायको वाऽपि ।
तरणौ सुरगुरुदृष्टे कुजभवने जायते श्रेष्ठः ॥ ७ ॥
[1]कुत्सितरामाभर्त्ता बहुशत्रुः क्षीणबान्धवो दीनः ।
भौमगृहे सितदृष्टे दिवाकरे जायते कुष्ठी ॥ ८ ॥
दुःखपरिप्लुतदेहः कार्योन्मादी भवेद्विमूढमतिः ।
भौमर्क्षे दिवसकरे रवितनयनिरीक्षिते मूर्खः ॥ ९ ॥
वदनाक्षिरोगतप्तः क्लेशसहिष्णुर्न[2] चापि बहुशत्रुः ।
भक्तो व्यवहाररतो [3]रतिमान्वन्ध्याङ्गनाद्वेषी ॥ १० ॥
भोजनमाल्याच्छादनगन्धयुतो गेयवाद्यनृत्तज्ञः ।
दिवसकरे वृषसंस्थे भवति पुमान् सलिलभीरुश्च ॥ ११ ॥
वेश्यारतिर्मृदुवचाः बहुयुवतिसमाश्रयो भवति ।
दिननाथे सितभवने दृष्टे शशिना सलिलजीवी ॥ १२ ॥
शूरः सङ्ग्रामरुचिस्तेजस्वी साहसाप्तधनकीर्तिः ।
दिननाथे सितभवने कुजसंदृष्टे पुमान् विकलः ॥ १३ ॥
लिपिलेख्यकाव्यपुस्तकगेयादिविधावतीव निपुणमतिः ।
दिननाथे सितभवने बुधसंदृष्टे भवेत् सुतनुः ॥ १४ ॥
बहुशत्रुमित्रपक्षो नृपसचिवश्चारुलोचनः कान्तः ।
दिननाथे सितभवने गुरुणा दृष्टे [4]सुतोषितो नृपतिः ॥१५॥
नृपतिर्नृपमन्त्री वा स्त्रीधनबहुयोगसंयुतो मतिमान् ।
दिननाथे सितभवने सितसंदृष्टे भवेद्भीरुः ॥ १६ ॥

---

१ कुत्सितरामासक्तः. २ कृशो न बहुपुत्रः. ३ मतिमान्. ४ सदोद्युक्तः.

नीचोऽलसो दरिद्रो वृद्धस्त्रीसंगतो विषमशीलः ।
दिननाथे सितभवने शनिदृष्टे व्याधिसन्तप्तः ॥ १७ ॥
मेधावी वाङ्मधुरो वात्सल्यगुणैर्युतः श्रुताचारः ।
विज्ञानशास्त्रकुशलो बहुवित्त उदारचेष्टश्च ॥ १८ ॥
निपुणो ज्योतिषवेत्ता मध्यमरूपो द्विमातृकः सुभगः ।
मिथुनस्थे दिनभर्त्तरि जातः पुरुषो विनीतः स्यात् ॥१९॥
रिपुबान्धवकृतपीडा विदेशगमनार्दितो बहुविलापी ।
बुधभवने दिनभर्तरि दृष्टे चन्द्रेण पुरुषः स्यात् ॥ २० ॥
रिपुभयकलहसमेतो रणापवादादिदुःखितो दीनः ।
बुधराशौ दिनभर्त्तरि कुजेक्षिते भवति सव्रीडः ॥ २१ ॥
भूपतिचरितः ख्यातो बान्धवसहितोऽरिभिश्च संत्यक्तः ।
बुधराशौ दिनभर्तरि बुधदृष्टे[1]ऽक्ष्यामययुतः स्यात् ॥ २२ ॥
बहुशास्त्रदारितमुखो राज्ञां दूतो विदेशगश्चण्डः ।
बुधराशौ दिनभर्तरि गुरुणा दृष्टे सदोन्मादः ॥ २३ ॥
धनदारपुत्रसुखितो[2] मन्दस्नेहस्त्वनामयः सुखितः[3] ।
बुधराशौ दिनभर्त्तरि सितसंदृष्टे भवेच्चपलः ॥ २४ ॥
बहुभृत्योद्विग्नमना बहुबन्धुविपोषणे सदा निरतः[4] ।
बुधराशौ दिनभर्तरि सौरेण निरीक्षिते कितवः ॥ २५ ॥
कर्मसु चपलः ख्यातो गुणैर्नृपाणां स्वपक्षविद्वेषी ।
स्त्रीदुर्भगः सुरूपः कफपित्तार्तः श्रमाभिसन्तप्तः ॥ २६ ॥
मद्यरुचिः[5] समधर्मा मानी वरवाक्यदेशदिग्वेत्ता ।
सूर्ये कुलीरसंस्थे बहुस्थितिः पितृगणद्वेष्टा ॥ २७ ॥
राजा राजसमो वा जलपण्य[6]धनस्थिरः[7] क्रूरः ।
कर्कटके तीव्रकरे दृष्टे शशिना भवेत्पुरुषः ॥ २८ ॥
शोर्ष[8]भगन्दररोगैः सन्तप्तो बन्धुभिः सह विरक्तः[9] ।
कर्कटके दिननाथे भौमेन निरीक्षिते पिशुनः[10] ॥ २९ ॥

---

१ बुधेन दृष्टे कृशतनुः स्यात्. २ सहितो. ३ सुभगः. ४ खिन्नः. ५ मद्यप्रियः सधर्मो. ६ बहु. ७ स्थितिः. ८ शोफ. ९ विरुद्धः. १० विसुतः.

विद्यामानयशोभिः ख्यातो नृपवल्लभो भवेन्निपुणः ।
सूर्ये कुलीरराशौ बुधेन दृष्टे विगतशत्रुः ॥ ३० ॥
श्रेष्ठो राज्ञो मन्त्री सेनानाथोऽथ सुप्रसिद्धश्च ।
सूर्ये शशिभवनस्थे गुरुणा दृष्टे कलाभ्यधिकः ॥ ३१ ॥
स्त्रीसेवी युवतिधनः परकार्यकरो रणे प्रचण्डश्च[1] ।
कर्कटकस्थे सूर्ये शुक्रेण निरीक्षिते प्रियालापः ॥ ३२ ॥
कफमारुतरोगार्तः परस्वहारी विलोममतिचेष्टः ।
कर्कटकस्थे भानौ स्वपुत्रदृष्टे पुमान् पिशुनः ॥ ३३ ॥
रिपुहन्ता क्रोधपरो विशिष्टचेष्टो वनाद्रिदुर्गचरः ।
उत्साही सच्छूरस्तेजस्वी मांसभक्षणो रौद्रः ॥ ३४ ॥
गम्भीरः स्थिरसत्वो बधिरः[2] क्षितिपालको धनसमृद्धः ।
सिंहस्थे दिवसकरे ख्यातः पुरुषो भवेज्जातः ॥ ३५ ॥
मेधावी सुकलत्रः कफार्दितो भूपवल्लभो मनुजः ।
आदित्ये सिंहस्थे चन्द्रेण निरीक्षिते भवति ॥ ३६ ॥
परदाररतः शूरः साहसकारी कृतोद्यमो रौद्रः ।
दिवसकरे सिंहस्थे कुजेन दृष्टे प्रधानश्च ॥ ३७ ॥
विद्वान् लिपिलेख्यकरः कितवासेवी परिभ्रमतिहीनः ।
सिंहस्थे दिवसकरे बुधेन दृष्टे न बहुसत्वः ॥ ३८ ॥
देवारामतटाकान् करोति सत्वाधिको विजनशीलः ।
सिंहे सहस्ररश्मौ सुरगुरुदृष्टे महाबुद्धिः ॥ ३९ ॥
दुर्नामकुष्ठरोगैरभिभूतो निर्दयो विगतलज्जः ।
सिंहे तिमिरविनाशे शुक्रेण निरीक्षिते जातः ॥ ४० ॥
कार्यविनाशनदक्षः षण्डो जातः परोपतापकरः ।
सिंहस्थे दिवसकरे स्वपुत्रदृष्टे पुमान् भवति ॥ ४१ ॥
स्त्रीतुल्यतनुर्ह्रीमान् लिपिवेत्ता दुर्बलश्च वल्गुकथः ।
मेधावी लघुसत्वो विद्वान् शुश्रूषकः सुर[3]गुरूणाम् ॥ ४२
संवाहनादिकर्मसु दक्षः श्रुतिगेयवाद्यपरितुष्टः ।

---

१ प्रभग्नश्च. २ मुखरः. ३ सुगुणः

कन्यायां दिवसकरे जातो मृदुदीनवाक्यश्च ॥ ४३ ॥
भङ्गक्षयव्ययार्तो विदेशमार्गादिलम्पटो द्विष्टः ।
नीचोपहतप्रीतिर्हिरण्यलोहादिपण्यजीवी च ॥ ४४ ॥
द्वेष्यः परकर्मरतः परदाररतिः पुमान् भवेन्मलिनः ।
सूर्ये तुलाधरस्थे नृपपरिभूतः प्रगल्भश्च ॥ ४५ ॥
अनिवारितरणवेगः श्रुतिधर्मरतो न सत्यवाङ्मूर्खः ।
प्रविनष्टदुष्टयुवतिः क्रूरः कुस्त्रीविधेयश्च ॥ ४६ ॥
क्रोधपरोऽसद्वृत्तो लोभिष्ठः कलहवल्लभोऽनृतवाक् ।
शस्त्राग्निविषग्रस्तः पितुर्जनन्याश्च दुर्भगः कीटे ॥ ४७ ॥
द्रव्यान्वितो नृपेष्टो जातः प्राज्ञः सुरद्विजानुरतः ।
शस्त्रास्त्रहस्तिशिक्षानिपुणो व्यवहारयोग्यश्च ॥ ४८ ॥
पूज्यः सतां प्रशान्तो धनवान् विस्तीर्णपीनचारुतनुः ।
बन्धूनां हितकारी सत्वयुतः कार्मुके सूर्ये ॥ ४९ ॥
वाक्बुद्धिविभवपुत्रैः समन्वितो नृपसमो विगतशोकः ।
वाक्पतिराशौ तपने दृष्टे चन्द्रेण सुशरीरः ॥ ५० ॥
संग्रामे लब्धयशाः स्फुटवचनो वित्तसौख्यसम्पन्नः ।
सूर्ये वाक्पतिराशौ भौमेन निरीक्षिते चण्डः ॥ ५१ ॥
मधुरवचनो लिपिज्ञः काव्यकलागोष्ठियानधातुज्ञः ।
गुरुभे सवितरि दृष्टे बुधेन जनसंमतो भवति ॥ ५२ ॥
विचरति नरेन्द्रभवने नृपतिर्वा वारणाश्वधनयुक्तः ।
सुरगुरुगृहे विवस्वति गुरुणा दृष्टे सदा विद्वान् ॥ ५३ ॥
दिव्यस्त्रीभोगयुतः सुगन्धमाल्यादिभिः सहितः ।
सुरगुरुभवने भानौ शुक्रेण निरीक्षिते शान्तः ॥ ५४ ॥
अशुचिः परान्नकाङ्क्षी नीचानुरतः चतुष्पदक्रीडः ।
देवेज्यगृहे सूर्ये मन्देन निरीक्षिते भवति ॥ ५५ ॥
लुब्धः कुस्त्रीसक्तः कुकर्मसंवर्धितः सतृष्णश्च ।
बहुकार्यरतो भीरुर्विहीनबन्धुश्चलप्रकृतिः ॥ ५६ ॥

---

१ सङ्ग.

परपुत्राणां पितरं गुरुभे सूर्येक्षितः सौरः ।
तेभ्यो धनं च लभते नाम ख्यातिं च पूजां च ॥ ५५ ॥
मातृरहितं सुशीलं नामद्वयसंयुतं रवेस्तनयः ।
कुरुते शशिना दृष्टो भार्यासुतवित्तसम्पन्नम् ॥ ५६ ॥
वातव्याधिगृहीतं लोकद्वेष्यं च[1] पापशीलं च ।
क्षुद्रं निन्दितशीलं गुरुभे भौमेक्षितः सौरः ॥ ५७ ॥
जनयति गुरुभवनस्थो नृपतिसमं सौख्यवन्तमाचार्यम् ।
मान्यं धनिनं सौम्यं सुभगं सौम्येक्षितः सौरः ॥ ५८ ॥
नृपतिं नृपतुल्यं वा मन्त्रिणमथ नायकं च सेनायाः ।
जनयति गुरुणा दृष्टः सर्वापद्वर्जितं सौरः ॥ ५९ ॥[2]
कुरुते द्विमातृपितृकं विपिनाद्रिषु जीविनं विविधशीलम् ।
जनयति सितेन दृष्टो रवितनयः कर्मसम्पन्नम् ॥ ६० ॥

॥ इति गुरुभे दृष्टिः ॥

रोगिणमरूपभार्यं परान्नभोगिनमतीव दुःखसहम् ।
अटनरतं भारसहं सौरः सूर्येक्षितः स्वगृहे ॥ ६१ ॥
चपलमसत्यं पापं मातुरनिष्टं प्रियानृतं स्वाढ्यम् ।
उत्पन्नाटनदुःखं स्वगृहे चन्द्रेक्षितः सौरः ॥ ६२ ॥
अतिशूरं विक्रान्तं विख्यातगुणं महाजनपुरोगम् ।
तीक्ष्णं साहसनिरतं स्वगृहे वक्रेक्षितः सौरः ॥ ६३ ॥
भारसहं तामसिकं शोभनमटनज्ञमल्पवित्तं च ।
धन्यं जनयति शनिभे बुधेन संवीक्षितः सौरः ॥ ६४ ॥
समुदितगुणं नरेन्द्रं नृपवंशकरं चिरायुषमरोगम् ।
त्रिदशगुरुदृष्टमूर्तिर्जनयति सौरः स्वगृहसंस्थः ॥ ६५ ॥
धनिनं परदाररतं सुभगं सुखिनं च वित्तवन्तं च ।
उत्पन्नपानभक्ष्यं स्वगृहे शुक्रेक्षितः सौरः ॥ ६६ ॥

॥ इति स्वगृहे दृष्टिः ॥

इति कल्याणवर्मविरचितायां सारावल्यां सौरचारो नाम एकोनत्रिंशोऽध्यायः ।

---

१ प्रवासशील. २. शनिः सचिवमर्थवर्जितं गुरुभे.

# त्रिंशोऽध्यायः

मूर्त्यादयः पदार्था जायन्ते येन सर्वजन्तूनाम् ।
तस्मादधुना वक्ष्ये भावाध्यायं विशेषेण ॥ १ ॥
लग्नेऽर्केऽल्पकचः क्रियालसमतिः क्रोधी प्रचण्डोन्नतो
मानी लोचनरूक्षकर्कशतनुः शूरोऽक्षमो निर्घृणः ।
स्फोटाक्षः शशिभे क्रिये सतिमिरः सिंहे निशान्धः पुमान्
दारिद्र्योपहतो विनष्टतनयो जातस्तुलायां नरः ॥ २ ॥
द्विपदचतुष्पदभागी मुखरोगी नष्टविभवसौख्यश्च ।
नृपचोरमुषितसारः कुटुम्बगे स्याद्रवौ पुरुषः ॥ ३ ॥
विक्रान्तो बलयुक्तो विनष्टसहजस्तृतीयके सूर्ये ।
लोके मतोऽभिरामः प्राज्ञो जितदुष्टपक्षश्च ॥ ४ ॥
वाहनबन्धुविहीनः पीडितहृदयश्चतुर्थके सूर्ये ।
पितृगृहधननाशकरो भवति नरः कुनृपसेवी च ॥ ५ ॥
सुखसुतवित्तविहीनः कर्षणगिरिदुर्गसेवकश्चपलः ।
मेधावी धनरहितः स्वल्पायुः पञ्चमे तपने ॥ ६ ॥
प्रबलमदनोदराग्निर्बलवान् षष्ठं समाश्रिते भानौ ।
श्रीमान् विख्यातगुणो नृपतिर्वा दण्डनेता वा ॥ ७ ॥
निःश्रीकः परिभूतः कुशरीरो व्याधितः पुमान् द्यूने ।
नृपबन्धनसन्तप्तोऽमार्गरतो युवतिविद्वेषी ॥ ८ ॥
विकलनयनोऽष्टमस्थे धनसुखहीनोऽल्पजीवितः पुरुषः ।
भवति सहस्रमयूखे स्वभिमतजनविरहसन्तप्तः ॥ ९ ॥
धनपुत्रमित्रभागी द्विजदैवतपूजनेऽतिरक्तश्च[1] ।
पितृयोषिद्विद्वेषी नवमे तपने सुतप्तः स्यात् ॥ १० ॥
अतिमतिरतिविभवबलो धनवाहनबन्धुपुत्रवान् सूर्ये ।
सिद्धारम्भः शूरो दशमेऽधृष्यः प्रशस्यश्च ॥ ११ ॥
सञ्चयनिरतो बलवान् द्वेष्यः प्रेष्यो विधेयभृत्यश्च[2] ।
एकादशे विधेयः प्रियरहितः सिद्धकर्मा च ॥ १२ ॥

१ भक्तः. २

विकलशरीरः काणः पतितो वन्ध्यापतिः पितुरमित्रः ।
द्वादशसंस्थे सूर्ये बलरहितो जायते क्षुद्रः ॥ १३ ॥

॥ इति रविः ॥

दाक्षिण्यरूपधनभोगगुणैः प्रधानः
चन्द्रे कुलीरवृषभाजगते विलग्ने ।
उन्मत्तनीचबधिरो विकलश्च मूकः
शेषे नरो भवति कृष्णतनुर्विशेषात् ॥ १४ ॥
अललितसुखमित्रयुतो धनैश्च चन्द्रे द्वितीयराशिगते ।
सम्पूर्णेऽतिधनेशो भवति नरोऽल्पप्रलापकरः ॥ १५ ॥
भ्रातृजनाश्रयणीयो मुदान्वितः सहजगे बलिनि ।
चन्द्रे भवति च शूरो विद्यावस्त्रान्नसङ्ग्रहणशीलः ॥ १६ ॥
बन्धुपरिच्छदवाहनसहितो दाता चतुर्थगे चन्द्रे ।
जलसंचारानुरतः[1] सुखासुखोत्कर्षपरिमुक्तः ॥ १७ ॥
चन्द्रे भवति न शूरो विद्यावस्त्रान्नसङ्ग्रहणशीलः ।
बहुतनयसौम्यमित्रो मेधावी पञ्चमे तीक्ष्णः ॥ १८ ॥
प्रचुरामित्रस्तीव्रो मृदुकायाग्निर्मदालसश्चन्द्रे ।
षष्ठे वृकोदरभवै[2] रोगैः सम्पीडितो भवति ।
रजनिकरे स्वल्पायुः षष्ठगते भवति संक्षीणे ॥ १९ ॥
सौम्यो धृष्यः सुखितः सुशरीरः कामसंयुतो द्यूने ।
दैन्यरुगर्दितदेहः कृष्णे संजायते शशिनि ॥ २० ॥
अतिमतिरतितेजस्वी व्याधिविबन्धक्षपितदेहः ।
निधनस्थे रजनिकरे स्वल्पायुर्भवति संक्षीणे ॥ २१ ॥
दैवतपितृकार्यपरः सुखधनमतिपुत्रसम्पन्नः ।
युवतिजननयनकान्तो नवमे शशिनि प्रियतमोद्योतः[3] ।
अविषादी कर्मपरः सिद्धारम्भश्च धनसमृद्धश्च ।
शुचिरतिबलोऽथ दशमे शूरो दाता भवेच्छशिनि ॥ २३ ॥
धनवान् बहुसुतभागी बह्वायुस्त्विष्टभृत्यवर्गश्च ।
इन्दौ भवेन्मनस्वी तीक्ष्णः शूरः प्रकाशश्च ॥ २४ ॥

---

१ बालाशयानुरक्तः. २ षष्ठे नर उदरभवैः. ३ प्रियसमाक्षः.

द्वेष्यः पतितः क्षुद्रो नयनरुगार्त्तोऽलसो भवेद्विकलः ।
चन्द्रे तथान्यजातो द्वादशगे नित्यपरिभूतः ॥ २५ ॥

इति चन्द्रः ॥

क्रूरः साहसनिरतः स्तब्धोऽल्पायुः स्वमानशौर्ययुतः ।
क्षतगात्रः सुशरीरो वक्रे लग्नाश्रिते चपलः ॥ २६ ॥
अधनः कदशनतुष्टः पुरुषो विकृताननो धनस्थाने ।
कुजनाश्रयश्च रुधिरे भवति नरो विद्यया रहितः ॥ २७ ॥
शूरो भवत्यधृष्यो भ्रातृवियुक्तो मुदान्वितः पुरुषः ।
भूपुत्रे सहजस्थे समस्तगुणभाजनं ख्यातः ॥ २८ ॥
बन्धुपरिच्छदरहितो भवति चतुर्थेऽथ वाहनविहीनः ।
अतिदुःखैः संतप्तः परगृहवासी कुजे पुरुषः ॥ २९ ॥
सौम्यार्थपुत्रमित्रश्चलमतिरपि पञ्चमे कुजे भवति ।
पिशुनोऽनर्थप्रायः खलश्चविकलो नरो नीचः ॥ ३० ॥
प्रबलमदनोदराग्निः[1] सुशरीरो व्यायतो बली षष्ठे ।
रुधिरे सम्भवति नरः स्वबन्धुविजयी प्रधानश्च ॥ ३१ ॥
मृतदारो रोगार्तोऽमार्गरतो भवति दुःखितः पापः ।
श्रीरहितः[2] सन्तप्तः शुष्कतनुर्भवति सप्तमे भौमे ॥ ३२ ॥
व्याधिप्रायोऽल्पायुः कुशरीरो नीचकर्मकर्ता च ।
निधनस्थे क्षितितनये भवति पुमान् शोकसन्तप्तः ॥ ३३ ॥
अकुशलकर्मा द्वेष्यः प्राणिवधपरो भवेन्नवमसंस्थे ।
धर्मरहितोऽतिपापो नरेन्द्रकृतगौरवो रुधिरे ॥ ३४ ॥
कर्मोद्युक्तो दशमे शूरो धृष्यः प्रधानजनसेवी ।
सुतसौख्ययुतो रुधिरे प्रतापबहुलः पुमान् भवति ॥ ३५ ॥
एकादशगे धनवान् प्रियसुखभागी तथा भवेच्छूरः ।
धनधान्यसुतैः सहितः क्षितितनये विगतशोकश्च ॥ ३६ ॥
नयनविकारी पतितो जायाघ्नः सूचकश्च रौद्रश्च ।
द्वादशगे परिभूतो बन्धनभाक् भवति भूपुत्रे ॥ ३७ ॥

इति कुजः ।

---

१ प्रबलोदराग्निपुंस्त्वः. २ श्रीरहितो विगततनुः सप्तमभवनस्थिते भौमे.

अनुपहतदेहबुद्धिर्देशकलाज्ञानकाव्यगणितज्ञः ।
अतिमधुरचतुरवाक्यो दीर्घायुः स्याद्बुधे लग्ने ॥ ३८ ॥
बुद्ध्योपार्जितविभवो धनभवनगतेऽन्नपानभोगी च ।
शोभनवाक्यः सुनयः शशितनये मानवो भवति ॥ ३९ ॥
[1]श्रमनिरतः परिदीनस्तृतीयराशौ बुधे भवति जातः ।
निपुणः सहजसमेतो मायाबहुलो नर[2]श्चलितः ॥ ४० ॥
पण्डितमाहुः सुभगो वाहनयुक्तो बुधे हिबुकसंस्थे ।
सुपरिच्छदः सुबन्धुर्भवति नरः पण्डितो नित्यम् ॥ ४१ ॥
मन्त्राभिचारकुशलो बहुतनयः पञ्चमे सौम्ये ।
[3]विद्यासुखप्रभावैः समन्वितो हर्षसंयुक्तः ॥ ४२ ॥
वादविवादे कलहे नित्यजितो व्याधितो बुधे षष्ठे ।
अलसो विनष्टकोपो निष्ठुरवाक्योऽतिपरिभूतः ॥ ४३ ॥
प्रज्ञां सुचारुवेषां नातिकुलीनां च कलहशीलां च ।
भार्यामनेकवित्तां द्यूने लभते महत्त्वं च ॥ ४५ ॥
विख्यातनामसारश्चिरजीवी कुलधरो निधनसंस्थे ।
शशितनये भवति नरो नृपतिसमो दण्डनायको वाऽपि॥४५॥
नवमगते भवति पुमानतिधनविद्यायुतः शुभाचारः ।
वागीश्वरोऽतिनिपुणो धर्मिष्ठः सोमपुत्रे हि ॥ ४६ ॥
प्रवरमतिकर्मचेष्टः [4]सकलारम्भो विशारदो दशमे ।
धीरः [5]सत्त्वसमेतो विविधालङ्कारसत्त्वभाक् सौम्ये ॥ ४७ ॥
धनवान् विधेयभृत्यः प्राज्ञः सौख्यान्वितो विपुलभोगी ।
एकादशे बुधे स्याद्दीर्घायुः ख्यातिमान् पुरुषः ॥ ४८ ॥
सुगृहीतवाक्यमलसं परिभूतं वाग्मिनं तथा प्राज्ञम् ।
व्ययगः करोति सौम्यः पुरुषं दीनं नृशंसं च ॥ ४९ ॥

इति बुधः ।

होरासंस्थे जीवे सुशरीरः प्राणवान् सुदीर्घायुः ।
सुसमीक्षितकार्यकरः प्राज्ञो धीरस्तथार्यश्च ॥ ५० ॥

---

१ श्रतिनिरतःपरिभूतः. २ नरस्सचलः. ३ विद्यासुखप्रतापैः. ४ सफलारम्भो. ५ सत्य.

धनवान् भोजनसारो वाग्मी सुवपुः सुवाक् सुवक्त्रश्च ।
कल्याणवपुस्त्यागी सुमुखो जीवे भवेद्धनगे ॥ ५१ ॥
अतिपरिभूतः कृपणः सदाजितो[1] मानवो भवति जीवे ।
मन्दाग्निस्त्रीविजितो दुश्चिक्ये पापकर्मा च ॥ ५२ ॥
स्वजनपरिच्छदवाहनसुखमतिभोगार्थसंयुतो भवति ।
श्रेष्ठः शत्रुविषादी चतुर्थसंस्थे सदा जीवे ॥ ५३ ॥
सुखसुतमित्रसमृद्धः प्राज्ञो धृतिमांस्तथा विभवसारः ।
पञ्चमभवने जीवे सर्वत्र सुखी भवति जातः ॥ ५४ ॥
सन्नोदराग्निपुंस्त्वः परिभूतो दुर्बलोऽलसः षष्ठे ।
स्त्रीविदितो रिपुहन्ता जीवे पुरुषोऽतिविख्यातः ॥ ५५ ॥
सुभगः सुरुचिरुदारः पितुरधिकः सप्तमे भवति जातः ।
वक्ता कविः प्रधानः प्राज्ञो जीवे सुविख्यातः ॥ ५६ ॥
परिभूतो दीर्घायुर्भृतको दासोऽथवा निधनसंस्थे ।
स्वजनप्रेष्यो[2] दीनो मलिनस्त्रीभोगवान् जीवे ॥ ५७ ॥
दैवतपितृकार्यरतो विद्वान् सुभगो भवेत्तथा नवमे ।
नृपमन्त्री नेता वा जीवे जातः प्रधानश्च ॥ ५८ ॥
सिद्धारम्भो मान्यः सर्वोपायः कुशलसमृद्धश्च ।
दशमस्थे त्रिदशगुरौ सुखधनजनवाहनयशोभाक् ॥ ५९ ॥
अपरिमितायद्वारो बहुवाहनभृत्यसंयुतः साधुः ।
एकादशभे जीवे न चातिविद्यो न चातिसुतः ॥ ६० ॥
अलसो लोकद्वेष्यो ह्यपगतवाग्दैवपक्षभग्नो वा ।
परितः सेवानिरतो द्वादशसंस्थे गुरौ भवति ॥ ६१ ॥

॥ इति गुरुः ॥

सुनयनवदनशरीरं सुखितं दीर्घायुषं तथा भीरुम् ।
युवतिजननयनकान्तं जनयति होरागतः शुक्रः ॥ ६२ ॥
प्रचुरान्नपानविभवं श्रेष्ठ[3]विलासं तथा सुवाक्यं च ।
कुरुते द्वितीयराशौ बहुधनसहितं सितः पुरुषम् ॥ ६३ ॥

१ सहजातो. २ सुजनप्रेष्य. ३ शिष्ट.

सुखधनसहितं शुक्रो दुश्चिक्ये स्त्रीजितं तथा कृपणम् ।
जनयति मन्दोत्साहं सौभाग्यपरिच्छदातीतम् ॥ ६४ ॥
बन्धुसुहृत्सुखसहितं कान्तं वाहनपरिच्छदसमृद्धम् ।
ललितमदीनं सुभगं जनयति हिबुके नरं शुक्रः ॥ ६५ ॥
सुखसुतमित्रोपचितं रतिपरमतिधनमखण्डितं शुक्रः ।
कुरुते पञ्चमराशौ मन्त्रिणमथ दण्डनेतारम् ॥ ६६ ॥
अधिकमनिष्टं स्त्रीणां प्रचुरामित्रं [1]निराकृतं विभवैः ।
विक्लवमतीव नीचं कुरुते षष्ठे भृगोस्तनयः ॥ ६७ ॥
अतिरूपदारसौख्यं बहु[2]रूपं कलहवर्जितं पुरुषम् ।
जनयति सप्तमधामनि सौभाग्यसमन्वितं शुक्रः ॥ ६८ ॥
दीर्घायुरनुपमसुखः शुक्रे निधनाश्रिते धनसमृद्धः ।
भवति पुमान् नृपतिसमः क्षणे क्षणे लब्धपरितोषः ॥६९॥
सममायततनुवित्तो दारयुवतिसुखसुहृज्जनोपेतः ।
भृगुतनये नवमस्थे सुरातिथिगुरुप्रसक्तः स्यात् ॥ ७० ॥
[3]उत्थानविवादजिताः सुखरतिभावार्थकीर्तयो यस्य ।
दशमस्थे भृगुतनये भवति पुमान् बहुमतिख्यातः ॥ ७१ ॥
प्रतिरूपदासभृत्यं बह्वायं सर्वशोकसन्त्यक्तम् ।
जनयति भवभवनगतो भृगुतनयः सर्वदा पुरुषम् ॥ ७२ ॥
अलसं सुखिनं स्थूलं पतितं मृष्टाशिनं भृगोस्तनयः ।
शयनोपचारकुशलं द्वादशगः स्त्रीजितं जनयेत् ॥ ७३ ॥

इतिशुक्रः ।

स्वोच्चस्वकीयभवने क्षितिपालतुल्यो
लग्नेऽर्कजे भवति देशपुराधिनाथः ।
शेषेषु दुःखगदपीडित एव बाल्ये
दारिद्र्य[4]कर्मवशगो मलिनोऽलसश्च ॥ ७४ ॥
विकृतवदनोऽर्थभोक्ता जनरहितो न्यायकृत्कुटुम्बगते ।
पश्चात्परदेशगतो जनवाहनभोगवान् सौरे ॥ ७५ ॥

---

१ विनाकृतं. २ बहु विभवं. ३ उत्थानविवादार्जितसुखरतिमानार्थकीर्तयो
४ काम वशगो.

मलिनः संस्कृतदेहो नीचोऽलसपरिजनो भवति सौरे ।
शूरो दानानुरतो दुश्चिक्यगते विपुलबुद्धिः ॥ ७६ ॥
पीडितहृदयो हिबुके निर्बान्धववाहनार्थमतिसौख्यः ।
बाल्ये व्याधितदेहो नखरोमधरो भवेत् सौरे ॥ ७७ ॥
सुखसुतमित्रविहीनं मतिरहितमचेतसं[1] त्रिकोणस्थः ।
सोन्मादं रवितनयः करोति पुरुषं सदा दीनम् ॥ ७८ ॥
प्रबलमदनं सुदेहं शूरं बह्वाशिनं विषमशीलम् ।
बहुरिपुपक्षक्षपितं रिपुभवनगतोऽर्कजः कुरुते ॥ ७९ ॥
सततमनारोग्यतनुं मृतदारं धनविवर्जितं जनयेत् ।
द्यूनेऽर्कजः कुवेषं पापं बहुनीचकर्माणम् ॥ ८० ॥
कुष्ठभगन्दररोगैरभितप्तं ह्रस्वजीवितं निधने ।
सर्वारम्भविहीनं जनयति रविजः सदा पुरुषम् ॥ ८१ ॥
धर्मरहितोऽल्पधनिकः[2] सहजसुतविवर्जितो नवमसंस्थे ।
रविजे सौख्यविहीनः परोपतापी च जायते मनुजः ॥८२॥
धनवान् प्राज्ञः शूरो मन्त्री वा दण्डनायको वाऽपि ।
दशमस्थे रवितनये बृन्दपुरग्रामनेता च ॥ ८३ ॥
बह्वायुः स्थिरविभवः शूरः शिल्पाश्रयो[3] विगतरोगः ।
आयस्थे भानुसुते धनजनसम्पद्युतो भवति ॥ ८४ ॥
विकलः पतितो मुखरो विषमाक्षो निर्घृणो विगतलज्जः ।
व्ययभवनगते सौरे बहुव्ययः स्यात् सुपरिभूतः ॥ ८५ ॥

इति शनिः ।

पापा निघ्नन्ति मूर्त्यादीन् भावान् पुष्णन्ति शोभनाः ।
विपरीतं रिपूरन्ध्रव्ययेषु सदसत्फलम् ॥ ८६ ॥
योगा[4] ये बलयोगाः[5] सौम्यसुहृद्रिपुनिरीक्षणाच्चैव ।
उच्चादिभवनसंस्थैर्ग्रहैश्च फलमन्यथा भवति ॥ ८७ ॥

इति कल्याणवर्मविरचितायां सारावल्यां भावाध्यायस्त्रिंशः ॥

---

१ विचेतसं २ ऽपथरतः. ३ शिल्पाश्रितो ४ योगाश्रय. ५ योगात्सौम्य.

# एकत्रिंशोऽध्यायः।

होरा चतुर्थसप्तमदशमेषु यथा द्वयोर्द्वयोर्ग्रहयोः ।
भवति फलसम्प्रयोगो जातस्य तथायमुपदेशः ॥ १ ॥
मातृपितृदुःखतप्तः सूर्येन्द्वोरुदयसंस्थयोर्मनुजः ।
मानसुतविभवहीनः परिभूतो जायते दुःखी ॥ २ ॥
बान्धवसुतसुखहीनो दारिद्र्ययुतो महाजडप्रकृतिः ।
चन्द्रे रसातलस्थे भास्करसहिते पुमान् जातः ॥ ३ ॥
मित्रैः सुतैश्च हीनः परिभूतो युवतिभिः सदा पुरुषः ।
चन्द्रे सप्तमभवने दिनकरसहिते भवेद्दीनः ॥ ४ ॥
सुशरीरं बलनाथं राजसिकं निर्दयं विषमशीलम् ।
सूर्येन्दू गगनस्थौ कुरुतः क्षपितारिपक्षं च ॥ ५ ॥
रविभौमयोर्विलग्ने पित्तप्रकृतिर्महाहवे शूरः ।
क्रोधी विक्षतगात्रः क्रूरश्च शठः कठोरः स्यात् ॥ ६ ॥
बन्धुजनवित्तहीनः[1] समस्तसुखवर्जितः क्षुभितः ।
कुजसूर्ययोश्चतुर्थे भवति पुमान् सर्वतो द्वेष्यः ॥ ७ ॥
स्त्रीविरहदुःखखिन्नः स्त्रीहेतोः परिभवं सदा प्राप्तः ।
रविरुधिरयोर्युवत्यां विदेशगमने रतो भवति ॥ ८ ॥
विफलारम्भो भृतको नित्योद्विग्नः प्रधाननृपसेवी ।
भूतनयदिवाकरयोः कर्मणि गतयोर्भवेद्विकलः ॥ ९ ॥
प्राज्ञो[2] बहुप्रलापी कठिनांगः शूरवल्लभो मतिमान् ।
लग्ने बुधदिनकरयोर्दीर्घायुः संभवेत्पुरुषः ॥ १० ॥
नृपतिसमो विख्यातो गृहीतकाव्यः कुबेरसमविभवः ।
रविशशितनयौ हिबुके स्थूलतनुर्वक्रनासश्च ॥ ११ ॥
वधबन्धनकृन्मृत्युर्गृहीतवाक्यो न चातिधनलुब्धः ।
स्त्रीरतिहीनश्चोरो द्यूने बुधसूर्ययोर्भवति ॥ १२ ॥
त्रिषु लोकेषु ख्यातो गजाश्वनाथो भवेन्महीपालः ।
दिनकरबुधयोर्दशमे न नीचराशिस्थयोरेव ॥ १३ ॥

१ मित्रहीनः, विभवहीनः. २ अज्ञो.

जीवार्कयोर्गुणयुतो मन्त्री बलनायकोऽथवा साधुः ।
लग्नस्थयोः प्रसूतौ विद्याधनभोगवान् ख्यातः ॥ १४ ॥
श्रुतिनीतिकाव्यनिरतं भव्यं जनसम्पदं प्रियालापम् ।
हिबुके सुरेज्यसूर्यौ निभृताचारं नरं कुरुतः ॥ १५ ॥
जीवार्कयोर्युवत्यां मदनवशात् स्त्रीजितः पितृद्वेषी ।
कनकमणिरजतमौक्तिकसमन्वितः शुभशरीरः स्यात् ॥१६॥
कीर्तिसुखमानविभवैः समन्वितः पार्थिवो भवेन्नभसि ।
रविदेवपुरोहितयोर्निन्द्येऽपि कुले नरो जातः ॥ १७ ॥
प्रियकलहस्त्वविनीतो मलिनाचारः सुदुःखितो नीचः ।
लग्ने रविभृगुसुतयोरत्यर्थकलत्रसम्परित्यक्तः ॥ १८ ॥
आदित्ये हिबुकस्थे भार्गवसहिते भवेन्नरो जातः ।
परभृत्यः शोकार्त्तः लोकद्वेष्यो दरिद्रश्च ॥ १९ ॥
स्त्रीभिः सम्परिभूतो द्रविणविहीनो बृहत्तनुर्द्वेष्यः ।
शैलवनेषु च विचरति रविसितयोः सप्तमस्थाने ॥ २० ॥
कर्मणि दिनकरसितयोः व्यवहाररतो नरेन्द्रसचिवः स्यात् ।
शास्त्रकलानिपुणमतिर्धनवाहनसौख्यसम्पन्नः ॥ २१ ॥
निन्दितजननीपुत्रः कुत्सितवृत्तिः सदा मलिनबुद्धिः ।
लग्ने सूर्यार्कजयोः पापाचारो भवेत्पुरुषः ॥ २२ ॥
सौरिश्चतुर्थराशौ भास्करसहिते पुमान् भवति नीचः ।
दारिद्र्यविहितमूर्त्तिः स्वबन्धुभिश्चापि परिभूतः ॥ २३ ॥
भान्वर्कजयोर्मदने मन्दालसदुर्भगाश्च जायन्ते ।
युवतिधनैः सन्त्यक्ता मृगयाभिरता महामूर्खाः ॥ २४ ॥
भानुः स्वपुत्रसहितो गगने भृतकं विदेशगं जनयेत् ।
नृपतेः क्वचिदासधनैश्चोरैर्मुषितं सदश्वधनम् ॥ २५ ॥
रक्ताग्निपित्तदोषैरभिभूतो जायते नरो राजा ।
क्षोणीसुतहिमकरयोर्लग्ने तीक्ष्णस्वभावश्च ॥ २६ ॥
सक्लेशो निर्द्रव्यः सुखसुतधनबन्धुहीनश्च ।
पाताले कुजशशिनोर्विकलश्च भवेत्तथा जातः ॥ २७ ॥

१ पित्तरोगैः.

क्षुद्रः परधनलुब्धो बहुप्रलापो न सत्यवचनश्च ।
ईर्ष्यायुक्तो मनुजः कुजशशिनोः सप्तमस्थाने ॥ २८ ॥
तुरगगजपत्तिसम्पत्समाकुलं तुहिनगुर्नरं कुरुते ।
रुधिरेण समायातो गगनतले विक्रमैर्युक्तम् ॥ २९ ॥
सुखबुद्धिसत्वयुक्तः सुभगः कान्तो विलग्नगे शशिनि ।
बुधसहिते भवति नरो वाचालश्चातिनिपुणश्च ॥ ३० ॥
बन्धुसुहृत्तनयसुखप्रतापकनकाश्वरत्नसंयुक्तम् ।
बान्धवराशाविन्दुर्जनयति बुधसंयुतः सुभगम् ॥ ३१ ॥
द्यूने बुधसंयुक्तो जनयति चन्द्रः प्रतापिनं पुरुषम् ।
नृपसंमतं नृपं वा विख्यातं सत्कविं ललितम् ॥ ३२ ॥
दशमे बुधहिमकरयोर्मानी धनवानतिख्यातः ।
नृपसचिवो वयसोऽन्ते दुःखी स्याद्बन्धुपरिहीनः ॥ ३३ ॥
लग्ने सुरेज्यशशिनोः क्षितिपः पृथुपीनवक्षाः स्यात् ।
बहुतनयमित्रभार्यः सुशरीरो बन्धुभिर्जुष्टः ॥ ३४ ॥
मन्त्री राजप्रतिमः सुखबन्धुसमन्वितो महाविभवः ।
बहुशास्त्राक्षतबुद्धिर्हिबुके स्याज्जीवशशिनोश्च ॥ ३५ ॥
जायाभवने कुरुतः सुप्राज्ञं पार्थिवं कलाकुशलम् ।
वाणिजकं जीवेन्दू नृपवल्लभमर्थवत् स्फीतम् ॥ ३६ ॥
कर्मणि सुरेज्यशशिनोर्विद्यादानार्थमानकीर्तियुतः ।
सौम्यः प्रलम्बबाहुः सर्वनमस्यो नरो भवति ॥ ३७ ॥
वेश्यास्त्रीकृतसौख्यः [1]कान्ततनुः संमतो गुरूणां च ।
माल्याम्बरगन्धयुतो लग्ने शशिशुक्रयोर्भवति ॥ ३८ ॥
पाताले शशिशुक्रौ स्त्रीजनसुखभागिनं नरं कुरुतः ।
जलसंयानाप्तधनं जनप्रियं भोगसम्पन्नम् ॥ ३९ ॥
जामित्रे सितशशिनोर्बहुयुवतिरतो न चातिधनपुत्रः ।
स्त्रीजननो मेधावी भूपति[2]चरितो भवेत्पुरुषः ॥ ४० ॥
मानाज्ञाविभवयुतः कर्मणि शुक्रे शशाङ्कयुते ।
राज्ञो मन्त्री ख्यातः क्षमान्वितः स्याद्बहुजनश्च ॥ ४१ ॥

---

१ कल्पतरुः. २ भूपतिरजितो.

दासाः खलाः सुरौद्रा भवन्ति लुब्धाश्च मानवा हीनाः ।
भास्करसुतहिमकरयोर्लग्ने निद्रालसाः पापाः ॥ ४२ ॥
जलमुक्तामणिपोतैर्जीवन्ति नरास्तथा खननवृत्त्या ।
हिबुके शशिरविसुतयोः श्रेष्ठा जनसंमता जाताः ॥ ४३ ॥
नगरग्रामपुराणां महत्तरा राजपूजिताः पुरुषाः ।
जायन्तेऽर्कजशशिनोर्जायाभवने युवतिहीनाः ॥ ४४ ॥
प्रचुरतुरंगमदलितारातिः ख्यातः कुयोषितः पुत्रः ।
भवति नराणामधिपः शशिशनियोगे खमध्यगते ॥ ४५ ॥
सौम्यग्रहसंयुक्तः प्रायेण शुभावहो भगणनाथः ।
भौमार्कियुतो[1]दृष्टो दशमे च चमूपतिं कुर्यात् ॥ ४६ ॥
हिंस्रोऽग्निकर्मकुशलो धातोर्वादे कृतश्रमो दूतः ।
भौमबुधयोर्विलग्ने गुप्त्यधिकारी भवेत्पुरुषः ॥ ४७ ॥
बान्धवरहितः सहितो मित्रैश्चधनान्नभोगवाहनवान् ।
हिबुके बुधभूसुतयोः स्वजनेषु निराकृतो जातः ॥ ४८ ॥
भ्रमति च देशाद्देशं कर्मकरो नीचपरिभूतः ।
भौमेन्दुजयोर्द्यूने सुविवादकरो मृतप्रथमदारः ॥ ४९ ॥
सेनाधिपतिः शूरः शठस्वभावो भवेदतिक्रूरः ।
बुधकुजयोराकाशे राज्ञोऽभिमतो नरो धीरः ॥ ५० ॥
मन्त्री गुणप्रधानो धर्मक्षेत्रे प्रलब्धपरिकीर्तिः ।
जीवकुजयोर्विलग्ने नित्योत्साही भवेत्पुरुषः ॥ ५१ ॥
बन्धुसुहृत्सम्पन्नः [2]स्थिरचित्तः सौख्यभाक् भवेद्धिबुके ।
भौमामरपूजितयोर्नृपसेवी देवगुरुभक्तः ॥ ५२ ॥
गिरिदुर्गतोयकाननविचरणशीलः सुबान्धवः शूरः ।
कुजजीवयोर्युवत्यां जायाहीनः पुमान् भवति ॥ ५३ ॥
त्रिदशगुरुभूमिसुतयोराकाशे पार्थिवो विपुलकीर्तिः ।
बहुधनजनपरिवारः कर्मसु निपुणो भवेत् पुरुषः ॥ ५४ ॥
शुक्रकुजयोर्विलग्ने वेश्यानिरतः [3]कुशीलकर्मा च ।
स्त्रीहेतोर्नष्टधनो न तु चिरजीवी भवेत्पुरुषः ॥ ५५ ॥

---

१ नेष्टो. २ स्थिरवित्तः. ३ कुशिल्प.

बन्धुसुतमित्रहीनो मानसपीडाभिरर्दितः पुरुषः ।
भौमसितयोश्चतुर्थे नानादुःखैर्भवेत्तप्तः ॥ ५६ ॥
स्त्रीलोलुपः कुचरितः स्त्रीहेतोः प्राप्तवान् महादुःखम् ।
भौमसितयोर्युवत्यां हीनाचारो भवेत्पुरुषः ॥ ५७ ॥
अस्त्राचार्यो मतिमान् विद्याधनवस्त्रमाल्यवान् भवति ।
ख्यातो नरेन्द्रसचिवः सितकुजयोर्व्योम्नि संस्थितयोः॥५८॥
संग्रामलब्धविजयो जननीद्वेष्यो भवेत्पुरुषः ।
भौमार्कजयोर्लग्ने ह्रस्वायुः क्षीणभाग्यश्च ॥ ५९ ॥
पानान्नसौख्यरहितः स्वजनैस्त्यक्तो भवति जातः ।
भौमार्कजयोर्हिबुके मित्रैश्च विवर्जितः पापः ॥ ६० ॥
जायासुखसुतहीनो दैन्यपरो व्याधितो व्यसनशीलः ।
भौमार्कजयोरस्ते जनपरिभूतो भवेत्कृपणः ॥ ६१ ॥
राज्ञः सम्प्राप्तधनो महापराधाच्च दण्डितस्तेन ।
भौमार्कजयोर्दशमे न सत्यवचनो नरो भवति ॥ ६२ ॥
शुभमूर्तिः शुभशीलो विद्वान्नृपसत्कृतो विषयनाथः ।
बुधजीवयोर्विलग्ने वाहनसुखभोगवान् भवति ॥ ६३ ॥
बन्धुसुहृत्सुखसहितः स्त्रीधनसौभाग्यसम्पन्नः ।
बुधजीवयोश्चतुर्थे निपुणो नृपसंमतो[१] भवति ॥ ६४ ॥
सुकलत्रो हतशत्रुर्बहुजनमित्रार्थसत्वसम्पन्नः ।
बुधजीवयोर्युवत्यामतीत्य पितृपक्षमधिकः स्यात् ॥ ६५ ॥
बोधनगुर्वोर्दशमे नरेन्द्रमन्त्री नृपोऽथवा भवति ।
मानाज्ञाख्यातियुतः श्रौतार्थपरो विनीतश्च ॥ ६६ ॥
बुधशुक्रयोर्विलग्ने सुशरीरः पण्डितः सतां सुभगः ।
नृपपूजितोऽतिधन्यो द्विजसुरभक्तो भवेत् ख्यातः ॥ ६७ ॥
बुधशुक्रौ हिबुकस्थौ पुत्रसुहृद्बन्धुसंयुतं सुभगम् ।
मन्त्रिणमथवा नृपतिं कुरुतः कल्याणसम्पन्नम् ॥ ६८ ॥
बुधशुक्रयोर्युवत्यां सद्बहुयुवतिपरिवेष्टितः पुरुषः ।
भोगधनैश्वर्ययुतो भवति सुखी संमतो राज्ञाम् ॥ ६९ ॥

१ बहुसंमतो.

बोधनसितयोः कर्मणि नीतिज्ञो भवति भूपतिः साधुः ।
नीचाश्रयो न चाढ्यः सफलारम्भः समर्थश्च ॥ ७० ॥
मलिनशरीरः पापी विद्याधनवाहनैः परित्यक्तः ।
सौम्यार्कजयोर्लग्ने ह्रस्वायुः क्षीणभाग्यश्च ॥ ७१ ॥
पानान्नबन्धुरहितः स्वजनेषु तिरस्कृतो भवति मूढः ।
सौम्यार्कजयोर्हिबुके मित्रैश्च विवार्जितः पापः ॥ ७२ ॥
ईश्वरभृतको मूर्खः परोपकारी न साधुरतिमलिनः ।
सौम्यार्कजयोरस्ते न सत्यवचनो नरो भवति ॥ ७३ ॥
प्रशमितसमस्तशत्रुः स्वजनसुहृद्वाहनार्थसम्पन्नः ।
सौम्यार्कजयोर्दशमे द्विजगुरुसुरपूजितो भवति ॥ ७४ ॥
जीवसितयोर्विलग्ने गुरूपदेशो भवेत् क्षमानाथः ।
ब्राह्मणकुलसंभूतोऽप्यनुकूलो भवति नृपतुल्यः ॥ ७५ ॥
प्रशमितसमस्तशत्रुः स्वजनसुहृद्वाहनार्थसम्पन्नः ।
जीवसितयोश्चतुर्थे द्विजगुरुसुरपूजितो भवति ॥ ७६ ॥
सुस्त्रीरत्नार्थयुतः स्त्रीजननो लब्धसौख्यकीर्तिश्च ।
गुरुशुक्रयोर्युवत्यां वरवाहनभोगवान् भवति ॥ ७७ ॥
गगनस्थौ गुरुशुक्रौ मानाज्ञाविभवविस्तरैस्सहितम् ।
जनयेतां पृथिवीशं बहुभृत्यधनं सुशीलं च ॥ ७८ ॥
लग्ने जीवार्कजयोर्मदालसा निष्ठुराः समभिजाताः ।
विद्वांसो धनसाराः किञ्चित्सुखिता भवन्ति खलाः ॥ ७९ ॥
नृपसचिवो निरुजतनुर्जयोदयी बान्धवैः सुहृद्भिश्च ।
पातालेऽर्कजगुर्वोः प्रीतिधनः सौख्यवान् भवति ॥ ८० ॥
स्त्रीवैरान्नष्टधनः शूरो व्यसनी शठो न शुभमूर्तिः ।
द्यूने सुरेज्ययमयोः पितृधनलुब्धश्च जायते मूर्खः ॥ ८१ ॥
दशमे भास्करिजीवौ नरेन्द्रदयितं च भूपतिं कुरुतः ।
अल्पापत्यं नचलं गोकुलबहुवाहनार्थं च ॥ ८२ ॥
रमते सर्ववधूभिः कान्तशरीरः सुखार्थभोगयुतः ।
लग्ने भृगुसुतयमयोर्बहुभृत्यः शोकसन्तप्तः ॥ ८३ ॥

मित्रेभ्यो धनलाभं बन्धुभ्यः सत्क्रियाः समाप्नोति ।
शनिशुक्रयोश्चतुर्थे नृपतेश्च तथाप्ततां याति ॥ ८४ ॥
स्त्रीरत्नानि सुखानि च धनानि कीर्तिञ्च भूतिमखिलां च ।
मन्दसितयोर्युवत्यां प्राप्नोति पुमान् विषयलाभम् ॥ ८५ ॥
सर्वद्वन्द्वविमुक्तो लोके ख्यातो विशिष्टकर्मा च ।
मेषूरणे सिताक्योर्नृपतेर्मन्त्री भवेदधिकः ॥ ८६ ॥
एवं त्रिभिश्चतुर्भिः पञ्चभिरथ सप्तभिश्च षड्भिर्वा ।
वक्तव्यं केन्द्रस्थैर्ग्रहयोगफलं विचिन्त्य धिया ॥ ८७ ॥

इति कल्याणवर्मविरचितायां सारावल्यां द्यन्तरयोगो नाम एकत्रिंशोऽध्यायः ॥

## द्वात्रिंशोऽध्यायः ।

सर्वमपहाय चिन्त्यं भाग्यर्क्षं प्राणिनां विशेषेण ।
भाग्यं विना न जन्तुर्यस्मात्तद्यत्नतो वक्ष्ये ॥ १ ॥
लग्नान्निशाकराद्वा यन्नवमं तद्गृहं भवेद्भाग्यम् ।
अनयोर्यो बलयुक्तो भाग्यगृहं चिन्तयेदस्मात् ॥ २ ॥
भाग्यर्क्षपतिः कस्मिन्नेको भाग्यर्क्षमाश्रितो विहगः ।
बलवान्मन्दबलो वा तस्याधिपतेस्तु कारको ज्ञेयः ॥ ३ ॥
स्वस्वामिदृष्टयुक्तं स्वदेशफलदायकं मुनिभिरुक्तम् ।
अन्येन सहितदृष्टं परदेशफलप्रदं भवति भाग्यम् ॥ ४ ॥
दुश्चिक्यगतो भाग्यं पञ्चमभवनस्थितो ग्रहः पश्येत् ।
होरागतश्च बलवान् येषां ते मानवाः श्रेष्ठाः ॥ ५ ॥
देवगुरौ भाग्यस्थे मन्त्री रविवीक्षिते नृपतितुल्यः ।
भोगी कान्तः शशिना काञ्चनभाँ भवति भौमेन ॥ ६ ॥
सौम्येन धनी ज्ञेयः सितेन गोवाहनार्थसंयुक्तः ।
सौरेण स्थावरभाक् दृष्टे खरमहिषसंयुक्तः ॥ ७ ॥
ऐश्वर्यरत्नकाञ्चनसाहसभागुत्तमश्च वीर्येण ।
रविरुधिराभ्यां दृष्टे वाहनपरिवारवान् पुरुषः ॥ ८ ॥

---

१ यन्नवमर्क्षं गृहं. २ कस्मिन् को वा. ३ भाग्-

चन्द्रार्काभ्यां दृष्टे सुसमृद्धो वल्लभः पितृजनन्योः ।
ख्यातो नरेन्द्रतुल्यो बहुदारसमन्वितः पुरुषः ॥ ९ ॥
ललितः कान्तः सुभगो वरयुवतिविभूषणार्थसम्पन्नः ।
बुधसूर्याभ्यां दृष्टे काव्यकलापण्डितः प्राज्ञः ॥ १० ॥
उत्सवसमाजशीलो गोमहिषाजवरवारणोपेतः ।
रविसितदृष्टे जीवे भाग्यस्थे स्याद्विनीतश्च ॥ ११ ॥
अर्कार्किभ्यां दृष्टे देशपुरश्रेणिनायकः ख्यातः ।
प्राज्ञो गुणवान् सधनो निधिनाथः संग्रहणशीलः ॥ १२ ॥
सेनाचार्यः स्फीतो मन्त्री वा जायते गुरौ भाग्ये ।
दृष्टे कुजचन्द्राभ्यां नानाविधसौख्यभाजनं सुभगः ॥ १३ ॥
उत्तमगृहशयनानां भोगी तेजोन्वितः क्षमाप्रतिमः ।
चन्द्रबुधाभ्यां दृष्टे जातः पुरुषोऽतिमतियुक्तः ॥ १४ ॥
आढ्यः कर्मोद्युक्तः शूरः परदारवान् सुतविहीनः ।
इन्दुसिताभ्यां दृष्टे भाग्यगृहे स्याद्गुरौ जातः ॥ १५ ॥
मदबहुलस्थिरजीवी परदेशरतो विवादशीलः स्यात् ।
अनृतवचनो गुणोनः शशियमदृष्टे गुरौ भाग्ये ॥ १६ ॥
सुप्राज्ञोऽतिसुशीलः सुगुणो[1] विद्वान् गृहीतवाक्यश्च ।
सुरुचिरवेषो जीवे कुजबुधदृष्टे भवेद्भाग्ये ॥ १७ ॥
धनवान्विद्यायुक्तो विदेशगः सात्विकोऽतिनिपुणश्च ।
क्षितितनयभार्गवाभ्यां दृष्टे क्रूरो नरो जातः ॥ १८ ॥
नीचः पिशुनो द्वेष्यो विदेशगश्चलजनैः समायुक्तः ।
भौमार्किभ्यां दृष्टे भाग्यगृहे सुरगुरौ जातः ॥ १९ ॥
शिल्पज्ञोऽतिसुशीलो विद्वान् सुभगो गृहीतवाक्यश्च ।
सुरुचिरवेषो जीवे बुधसितदृष्टे भवेद्भाग्ये ॥ २० ॥
सुभगो विद्वान् वक्ता ललितः शूरः सुखी विनीतश्च ।
जीवे भाग्योपगते बुधार्किदृष्टे पुमान् भवति ॥ २१ ॥
देवगुरौ भाग्यस्थे काव्यार्कजवीक्षिते पुमान् भवति ।
राजेश्वरराष्ट्राणां पुरोगमो धनसमृद्धश्च ॥ २२ ॥

---

१. सुभगो.

राश्यधिपेन च दृष्टे जीवे भाग्याश्रिते नृणां ज्ञेयम् ।
एभिः कथितैर्दृष्टे फलमिदमन्यैरसन्दृष्टे ॥ २३ ॥
उत्तमरूपो गुणवान् तेजस्वी पार्थिवो महाविभवः ।
देवगुरौ भाग्यस्थे सर्वग्रहवीक्षिते भवति ॥२४ ॥
भाग्ये शुभगगनसदो वलिनो राज्यप्रदास्तु विज्ञेयाः ।
स्थावरधनधान्यकरा धर्मायुर्वर्धनाश्चैव ॥ २५ ॥
नीचारिराशिसंस्थाः पापा भाग्ये न सौम्यसंदृष्टाः ।
दुर्बलमधनं कुर्युर्विगतख्यातिं नरं मलिनम् ॥ २६ ॥
स्वे स्वे भवने पुंसां क्रूरा भाग्यर्क्षसंस्थिता ये स्युः ।
ज्ञेयास्त उत्तमशुभा बहुतरगुणसंयुताः शुभैर्दृष्टाः ॥ २७ ॥
पूर्णेन्दुयुते भाग्ये वक्रार्किबुधाः प्रधानवीर्याश्च ।
व्यस्ता वाऽथ समस्ताः प्रधाननृपसंभवो ज्ञेयः ॥ २८ ॥
सकलगगनगेहाः स्वोच्चगा भाग्यराशौ
धनकनकसमृद्धं श्रेष्ठमुत्पादयन्ति ।
अथ शुभविहगेन्द्रैस्तत्र दृष्टे नरेन्द्रं
विनिहतरिपुपक्षं दिव्यकान्तिं सुकीर्त्तिम् ॥ २९ ॥
सूर्यश्चन्द्रसहायो भाग्ये स्वल्पायुषं नरं कुरुते ।
नयनव्याधितमाढ्यं सुभगं कलहप्रियं चापि ॥ ३० ॥
भानुर्वक्रसमेतो नानादुःखान्वितं नरं कुरुते ।
कलहप्रियं प्रचण्डं शूरं नृपवल्लभं निपुणम् ॥ ३१ ॥
रविसहितः शशितनयो निपुणं दुःखान्वितं बहुविपक्षम् ।
जनयति भाग्ये पुरुषं नानारोगैः परिगृहीतम् ॥ ३२ ॥
सुरगुरुसहितः सूर्यो भाग्ये कुर्याद्धनान्वितं पुरुषम् ।
पितरं च धनसमृद्धं दीर्घायुषमार्यमतिशूरम् ॥ ३३ ॥
शुक्रसहायः सूर्यो व्याधितदेहं नरं कुरुते ।
प्रियगन्धमाल्यभूषणवस्त्रालङ्कारसंयुतं भाग्ये ॥ ३४ ॥
सूर्यः सौरसहायो धनिनं नेत्रातुरं कलहनिष्ठम् ।
व्याधितपितरं कुरुते भाग्ये स्वल्पायुषं पुरुषम् ॥ ३५ ॥

चन्द्रो रुधिरसहायो भाग्यं समुपेत्य मातरं हन्यात् ।
कुर्याच्च विकलगात्रं सव्रणदेहं समृद्धं च ॥ ३६ ॥
चन्द्रः स्वसुतसमेतः शास्त्रज्ञं पण्डितं विकलदेहम् ।
जनयत्युत्तमपुरुषं बहुवाचं विश्रुतं चैव ॥ ३७ ॥
सुरगुरुसहिते चन्द्रे भाग्ये प्रवरः प्रसूयते पुरुषः ।
सौभाग्यधनसमृद्धः सर्वत्र सुखान्वितो धीरः ॥ ३८ ॥
चन्द्रो भार्गवसहितो भाग्यगृहे व्याधितं नरं कुरुते ।
कुलटापतिं समृद्धं मातृसपत्नीप्रदं सचिववश्यम् ॥ ३९ ॥
रविसुतसहितश्चन्द्रो नवमे राशौ विकृष्टधर्माणम् ।
जनयति मनुजं पापं माता च कुलच्युता भवति ॥ ४० ॥
रुधिरः सोमजसहितो भाग्यर्क्षे जनयति प्रधानं च ।
नित्योद्विग्नं सुभगं भोगयुतं शास्त्रकुशलं च ॥ ४१ ॥
भौमः सुरगुरुयुक्तो भाग्ये धनधान्यभागिनं पुरुषम् ।
पूज्य व्याधितदेहं क्लिष्टं व्रणदीक्षितं प्रसवे ॥ ४२ ॥
भार्गवसहितः क्षितिजः परदेशरतं विवादिनं क्रूरम् ।
स्त्रीद्वेषिणं कृतघ्नं जनयति मिथ्याप्रधानं च ॥ ४३ ॥
पापं मलिनाचारं परदाररतं विनष्टधनसौख्यम् ।
कुजरविजौ भाग्यगृहे स्वजनविहीनं नरं कुरुते ॥ ४४ ॥
सौम्यः सुरगुरुसहितः शास्त्रज्ञं पण्डितं धनसमृद्धम् ।
प्रियवादिनं कलाज्ञं प्रभविष्णुमहत्तरं भाग्ये ॥ ४५ ॥
भृगुसुतसहितः सौम्यः ख्यातं च सुपण्डितं धीरम् ।
सुभगं वचनसमर्थं जनयति नीतिप्रियं भाग्ये ॥ ४६ ॥
सूर्यजसहितः सौम्यो व्याधितमाढ्यं प्रियान्वितं निपुणम् ।
जनयति भाग्ये पुरुषं सद्द्वेष्यं बहुकथं चैव ॥ ४७ ॥
शुक्रः सुरगुरुसहितो भाग्यगृहस्थो नराधिपं कुरुते ।
चिरजीविनं सुवाक्यं नानाविधसौख्यसम्पन्नम् ॥ ४८ ॥
जीवः सौरसहायो भाग्ये धनरत्नभागिनं कुरुते ।
पूज्यं व्याधितदेहं स्वजनविहीनं सदा पुरुषम् ॥ ४९ ॥

सौरसहायः शुक्रो व्याधितदेहं नरं कुरुते ।
बहुपुत्रं[1] नृपतीष्टं यशस्विनं शीलसम्पन्नम् ॥ ५० ॥
एवं स्थानविशेषैर्दृष्टिविशेषैश्च निपुणमधिगम्य ।
ब्रूयात्फलनिर्देशं शास्त्रादनुरूपतः प्राज्ञः ॥ ५१ ॥
सव्रणगात्रं रूक्षं मृतपितरं मातृवर्जितं कुर्युः ।
बाल्ये क्षुद्रं द्वेष्यं हिंस्रं शशिरुधिरभानवो भाग्ये ॥ ५२ ॥
रविचन्द्रबुधा भाग्ये क्लीबाकारं सुदुःखितं कुर्युः ।
सर्वजनानां द्वेष्यं विक्रान्तं सत्यवचनं च ॥ ५३ ॥
चन्द्रदिवाकरगुरवो नवमे पुरुषस्य सम्भवे यस्य ।
स भवत्युत्तमपुरुषो वाहनधनसौख्यसम्पन्नः ॥ ५४ ॥
रविचन्द्रसिता नवमे स्त्रीकलहैर्नष्टसर्वधनसौख्यम् ।
नृपसंमतं नयज्ञं जनयन्ति नरं प्रियालापम् ॥ ५५ ॥
सूर्यनिशाकरसौरा नवमे राशौ नरं सदा कुर्युः ।
प्रबलं चण्डाचारं परभृत्यं लोकविद्विष्टम् ॥ ५६ ॥
रविभौमबुधा नवमे कुर्वन्ति नरं प्रियालापम् ।
भुजगमिवातिक्रुद्धं[2] समरपरं निष्ठुरं प्रवासरतम्[3] ॥ ५७ ॥
रविगुरुवक्रा नवमे जनयन्ति नरं सदोद्युक्तम् ।
देवपितृपूजनरतं समृद्धदारं गुणोपेतम् ॥ ५८ ॥
कलहप्रिय कुलीनं कन्यानां दूषकं च चपलं च ।
दिवसकरवक्रशुक्रा नवमे द्वेष्यं नरं कुर्युः ॥ ५९ ॥
साहसिकमतिक्षुद्रं लोकद्वेष्यं प्रियानृतं क्रूरम् ।
पित्रा रहितं बाल्ये कुर्युर्वक्रार्किभानवो नवमे ॥ ६० ॥
रविबुधगुरवो नवमे भाग्यसमेतं धनान्वितं सुभगम् ।
नृपतिप्रियं सुवेषं जनयन्ति नरं सुधीरं च ॥ ६१ ॥
रविबुधशुक्रा भाग्ये जनयन्ति नरं प्रकाशिनं कान्तम् ।
रिपुपक्षपरिक्षीणं नृपतिसमं सारवन्तं च ॥ ६२ ॥
परदाररतं पापं प्रवासशीलं च निपुणमतिधृष्टम् ।
आनृतिकमदैवपरं रविबुधसौरा नरं भाग्ये ॥ ६३ ॥

१ बहुवित्तं. २ सुभगमथा. ३ प्रवासार्त्तम्.

भाग्यगृहे रविशुक्रौ जीवश्च नरं सुपण्डितं कान्तम् ।
बहुविषयपतिं वीरं जनयन्ति सुमेधसं प्राज्ञम् ॥ ६४ ॥
त्रिदशगुरुसौरसूर्या नवमे यस्येह जायमानस्य ।
स भवेदुत्तमवीर्यो राजा धनवान् गुणैः समृद्धश्च ॥ ६५ ॥
कान्तिविहीनं मलिनं भूपतिपरिदण्डितं विभवहीनम् ।
जनयन्ति नरं भाग्ये रविशुक्रशनैश्चरा मूर्खम् ॥ ६६ ॥
धनकनकरत्नभाजं जनयन्ति शशिज्ञभूमिजाः पुरुषम् ।
प्रथमे वयसि च तप्तं भाग्यगृहे सर्वनाशेन[1] ॥ ६७ ॥
भौमनिशाकरजीवाः कुर्वन्ति नरं जितेन्द्रियं प्राज्ञम् ।
गुरुदेवभक्तिनिरतं विद्याधनभागिनं सुभगम् ॥ ६८ ॥
व्रणितांगमरूपं वा प्रभेदिनं[2] स्त्रीप्रियं युवतिवश्यम् ।
युवतिविनाशितसारं भृगुशशिवक्रा नरं नवमे ॥ ६९ ॥
व्यापन्नमातृवंशं क्षुद्रं बाल्ये निराकृतं मात्रा ।
सौरो भौमश्चन्द्रो जनयन्ति नराधमं नवमे ॥ ७० ॥
गुरुबुधचन्द्रा नवमे कुलवंशविवर्धनं कुर्युः ।
आचार्यं बहुमित्रं नृपतिं बहुसाधनोपेतम् ॥ ७१ ॥
मातृसपत्नीजनकं प्रमुदितमानान्वितं प्रचुरमित्रम् ।
कुर्वन्ति सामशीलं भृगुबुधचन्द्रा नरं भाग्ये ॥ ७२ ॥
शशिबुधसौरा नवमे क्रूराचारं सुविक्रमं मलिनम् ।
जनयन्ति कुत्सितधियं संग्रामपराङ्मुखं दीनम् ॥ ७३ ॥
चन्द्रबृहस्पतिशुक्रा नवमे यस्येह जायमानस्य ।
स भवति महीपतुल्यो नृपतिकुले भूपतिश्चैव ॥ ७४ ॥
शशिगुरुसौरा नवमे कुर्वन्ति नरं प्रियालापम् ।
सत्यव्रतं सुशीलं विख्यातं सर्वशास्त्रकुशलं च ॥ ७५ ॥
शुक्रेन्दुयमा नवमे कृषिवृत्तिं योनिपोषणानुरतम् ।
कुर्युर्मनुजमपापं[3] नृपकृत्यं लोकविख्यातम् ॥ ७६ ॥
तेजस्विनं विशोकं विद्वांसं वाक्स्थिरं विशिष्टं वा ।
कुजबुधजीवा नवमे कुर्वन्ति च मण्डलाधिपतिम् ॥ ७७ ॥

---

१ भावेन. २ प्रभक्षणं. ३ मनुजं पापम्.

बहुविषयपतिं ख्यातं नरेन्द्रसत्कारसत्कृतं चण्डम्।
कुजबुधशुक्रा भाग्ये कुर्वन्ति नरं सतां सत्यम् ॥ ७८ ॥
परवञ्चनासु निपुणं तमोधिकं सर्वशास्त्रमतिवाह्यम्।
बुधभौमयमा नवमे कुर्युः परतर्कसंमूढम् ॥ ७९ ॥
बुधगुरुशुक्रा भाग्ये जनयन्ति नरं सुरोपमं विशदम्।
विख्यातं नरनाथं विद्वांसं धर्मशीलं च ॥ ८० ॥
शुक्रशनैश्चरशशिजा नवमस्था जातकं प्रकुर्वन्ति।
मेधाविनं प्रकाशं सुरुचिरवाक्यं सुखोपेतम् ॥ ८१ ॥
शनिशुक्रामरगुरवो भाग्यगृहस्था नरं प्रकुर्वन्ति।
प्रचुरान्नपानविभवं सुभगं सुखितं सुरूपं च ॥ ८२ ॥

The following combinations of planets taken four at a time are treated of in slokas 83–108 to be found only, in the OL. MS.

रविचन्द्रभौमशशिजा जन्मनि भाग्यर्क्षगा नरं कुर्युः।
धनिनं विद्याकुशलं सुभगं नृपसंमतं चैव ॥ ८३ ॥
शुक्रेन्दुभौमरवयो मायाचतुरं स्वदारसन्तुष्टम्।
जनयन्ति सदा भाग्ये पुरुषं बहुनीचकर्माणम् ॥ ८४ ॥
शशिसुरगुरुबुधरवयो जन्मनि भाग्यर्क्षमाश्रिताः कुर्युः।
पुरुषं प्रधानमचलं नरेन्द्रपूज्यं तथा दृष्टम् ॥ ८५ ॥
चन्द्रबुधशुक्ररवयो धनेश्वरं धार्मिकं समृद्धंच।
जनयन्ति नवमसंस्थाः पुरुषं प्रियवादिनं शान्तम् ॥ ८६ ॥
तरणिबुधचन्द्रसौरा जन्मनि नवमाश्रिता नरं कुर्युः।
.......................................— ॥ ८७ ॥
रविगुरुबुधभूतनया जन्मनि नवमे नरं प्रकुर्वन्ति।
देवपितृपूजनपरं समृद्धदारं गुणोपेतम् ॥ ८८ ॥
शुक्रज्ञभौमसूर्या नवमे जनयन्ति निष्ठुरं सुभगम्।
साहसनिरतं विधनं रिपुपक्षक्षपितविभवं च ॥ ८९ ॥
रविसौरिचान्द्रिभौमा नवमे यस्येह जायमानस्य।
स भवति परदाररतो विनष्टकोशः सदा दीनः ॥ ९० ॥

शुक्रगुरुभौमरवयो लोके द्वेष्यं पिपासार्त्तम्।
जनयन्ति नवमसंस्थाः कन्यानां दूषकं चपलचित्तम्॥९१॥
गुरुभौमसौरसूर्या नवमे सुखवर्जितं सदोद्युक्तम्।
जनयन्ति नरं चण्डं विक्रमयुक्तं महासत्वम्॥ ९२ ॥*
रविबुधजीवसिताः स्युर्नवमे यस्येह जायमानस्य।
स भवत्युत्तमपुरुषो धनकनकैश्वर्यसम्पन्नः॥ ९३ ॥
भानुजरविबुधगुरवो नवमे जनयन्ति मानवं निधनम्।
पापं परदाररतं विद्विष्टं नीचकर्माणम्॥ ९४ ॥
बुधरविजरविसिताः स्युर्भाग्यस्थाने नरं सुभगम्।
जनयन्ति धनसमेतं सत्यरतं लोकविख्यातम्॥ ९५ ॥
रविगुरुसितभानुसुता जन्मनि नवमर्क्षगा नरं कुर्युः।
सत्यव्रतं सुवाक्यं गुरुद्विजातिथिषु भक्तम्॥ ९६ ॥
चन्द्रज्ञकुजसुरेज्या जनयन्ति नरं परिच्छदसमृद्धम्।
बाल्ये मातृवियुक्तं धनान्वितं संस्थिता भाग्ये॥ ९७ ॥
भौमसितशशिजचन्द्रा भाग्ये जनयन्ति तापसं ख्यातम्।
वाग्मिनमतिदातारं परलोकपरं महाप्राज्ञम्॥ ९८ ॥
रविजबुधचन्द्रभौमा जनयन्ति नरं पराङ्मुखं दीनम्।
क्षुद्रं मायाचतुरं परदाररतं स्थिता भाग्ये॥ ९९ ॥
भौमेन्दुशुक्रजीवा नृपवंशकरं प्रधानमतिशूरम्।
विद्याधनसुसमृद्धं विख्यातं लोकसंमतं चैव॥ १०० ॥†
शशिवक्रार्किसुरेज्या जनयन्ति नरं पिपासार्तम्।
कलहप्रियं च नवमे सौभाग्यपरिच्छदातीतम्॥ १०१ ॥
चन्द्रारभानुजसिता नवमे जनयन्ति निष्ठुरं पापम्।
मायाविनं च पुरुषं शौचाचारैर्विहीनं च॥ १०२ ॥
सितगुरुशशिजशशाङ्का जन्मनि भाग्यर्क्षमाश्रिता धनिनम्।
जनयन्ति धर्मसक्तं नरं कलासु प्रसिद्धं च॥ १०३ ॥

---

* Sloka 92 is found in P. L. and K. N. MSS.
† Sloka 100 is found in the P. L. M. S.

प्राज्ञं नृपतिं कुलजं प्रधानमतिवित्तसंयुतं कान्तम् ।
सौम्येन्दुशुक्रजीवा जनयन्ति नरं तु विख्यातम् ॥*
K. N. M. S. reads the same Sloka thus.
गुरुसौम्यशुक्रचन्द्रा भाग्ये युक्ताः प्रजायमानस्य ।
यस्य स भाग्ये युक्तो लोके पुरुषोत्तमो ज्ञेयः ॥
भानुजबुधगुरुचन्द्रा जनयन्ति नरं ...सुनयम् ।
भाग्यस्थिताः समृद्धं नीतिज्ञं चारुवेषं च ॥ १०४ ॥
शनिशुक्रबुधशशाङ्का जन्मनि भाग्यस्थिता नरं कुर्युः ।
मेधाविनं प्रचण्डं जननीतिविशारदं धन्यम् ॥ १०५ ॥
चन्द्रशनिशुक्रजीवा जन्मनि नवमस्थिताः प्रकुर्वन्ति ।
मायाविनं प्रचण्डं नरेष्वजेयं नरं धीरम् ॥ १०६ ॥
भौमज्ञसूरिशनयो नवमस्थानोपगा नरं कुर्युः ।
रिपुपक्षपरिक्षीणं रणप्रचण्डं सुधीरं च ॥ १०७ ॥
भौमज्ञशुक्रशनयो-दशानुगतं सुशीलं च ।
जनयन्ति नवमसंस्था धनयुक्तं भक्तियुक्तं च ॥ १०८ ॥
भौमभृगुजीवरविजा जनयन्ति नरं धनैः परित्यक्तम् ।
क्षुद्रं दयाविरहितं विहीनसत्वं स्थिता भाग्ये ॥ १०९ ॥
त्रिचतुःपञ्चखगेन्द्रास्तथा च षट् सप्त संस्थिता भाग्ये ।
प्रात्ययिकं धनवन्तं कुर्युर्नृपतिं च बुधसहिताः ॥ ११० ॥
जनयन्ति भाग्यसंस्था गुरुसौम्यविवर्जिता ग्रहाः पुरुषम् ।
व्याधिप्रायमकान्तं जनहीनं बन्धनार्तमतिदीनम् ॥ १११ ॥
उक्तं बहुप्रकारं भाग्यगृहे बादरायणादिकृतम् ।
ग्रहयोगेक्षणभावैर्विचिन्त्य बुद्ध्या वदेदन्यत् ॥ ११२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां भाग्यचिन्तानाम द्वात्रिंशोऽध्यायः ॥

---

## त्रयस्त्रिंशोऽध्यायः ॥

लग्नाद्दशमे राशौ कर्मफलं यत्प्रकीर्तितं मुनिभिः ।
राशिग्रहस्वभागैर्ग्रहदृष्ट्या तदहमपि वक्ष्ये ॥ १ ॥

---

* Reading of Sloka 103 in the P. L. M. S. १. भावै.

होरेन्द्वोर्बलयोगाद्यो दशमस्तत्स्वभावजं कर्म ।
तस्याधिपपरिवृद्ध्या वृद्धिर्ज्ञेयाऽन्यथा हानिः ॥ २ ॥
जाङ्गलमथवानूपं तथोभयं वा गृहं परीक्षेत ।
ग्राम्यमथारण्यं वा सौम्यर्क्षं पापभवनं वा ॥ ३ ॥
द्विपदचतुष्पदरूपं सरीसृपं वा तथोभयं चैव ।
यद्रूपं तद्भवनं यादृशकं यत्स्वभावं च ॥ ४ ॥
प्रवदेत्तत्समदेशे कर्मप्राप्तिं नरस्य तत्सदृशीम् ।
तस्माद्दशमं भवनं प्रसवे बुध्येत यत्नेन ॥ ५ ॥
दशमे नक्षत्रपति(ते)र्लग्नात्पुरुषस्य कर्म संभवति ।
सर्वारम्भे वृत्तिं विनिर्दिशेत्तस्य जातस्य ॥ ६ ॥
ह्यन्तरयोगाध्याये कथितं कर्मस्थितैर्ग्रहैर्लग्नात् ।
चन्द्रादत्र विशेषो ग्रहैः स्थितैर्व्यक्तमिह वक्ष्ये ॥ ७ ॥
चन्द्राद्दशमे सूर्यः सिद्धारम्भं धनैः समृद्धं च ।
जनयत्युत्तमसत्वं नृपतिमुदग्रं धनाश्रयं पुष्टम् ॥ ८ ॥
भौमः साहसनिरतं प्रत्यन्तनिवासिनं विषयलुब्धम् ।
क्रूरं निषादचरितं जनयति दशमे स्थितः पुरुषम् ॥ ९ ॥
विद्वांसं धनवन्तं बहुश्रुतं नृपतिनायकं ख्यातम् ।
जनयति सौम्यो दशमे पुरुषं बहुशिल्पिनं प्राज्ञम् ॥ १० ॥
गुरुरपि दशमस्थाने सिद्धार्थं धार्मिकं धनसमृद्धम् ।
जनयत्युत्तमचरितं नरेन्द्रसचिवं नरं ख्यातम् ॥ ११ ॥
शशिनो दशमे शुक्रः सुभगं ललितं च वित्तवन्तं च ।
जनयति सिद्धारम्भं धनिनं नृपपूजितं पुरुषम् ॥ १२ ॥
सौरो व्याधितदेहं निःस्वं दुःखान्वितं प्रजाहीनम् ।
कर्मसु नित्योद्विग्नं जनयति दशमे स्थितः पुरुषम् ॥ १३ ॥
भानुर्भौमसमेतः कर्मकरान् कासशोषगदबहुलान् ।
ज्योतिर्विदः प्रकुर्याल्लाक्षणिकांस्तार्किकांश्चापि ॥ १४ ॥

---

१ तत्स्वभावं. २ यस्य. ३ सिद्धिं. ४ जनाश्रयं. ५ सिनं. ६ नृपतिसंमतं ७ कामशोकमदबहुलान्.

सूर्यः सौम्यसमेतो वस्त्रालङ्कारभागिनं वणिजम् ।
जनयति मेषूरणगः पुरुषं जलजीविनं वाऽपि ॥ १५ ॥
जीवसहायः सूर्यः सिद्धारम्भान्नरेन्द्रमान्यांश्च ।
जनयति दशमे पुरुषान् वीरान्[1] शूरान् सुविख्यातान् ॥ १६ ॥
सूर्यसहायः शुक्रो दशमे स्वजनाश्रितं नरं कुरुते ।
स्त्रीसंश्रयात्समृद्धं सुभगं नृपवल्लभं चापि ॥ १७ ॥
सूर्यः स्वपुत्रसहितो दशमे वधबन्धभागिनं भृतकम् ।
जनयति दीनं कृपणं चोरैर्मुषितं प्रलापकरम् ॥ १८ ॥
भौमः सोमजसहितो जनयति दशमे नरं बहुविपक्षम्[2] ।
अस्त्रकलावेत्तारं कौशलमतिजीविनं महाशूरम् ॥ १९ ॥
भौमः सुरगुरुसहितो दशमे कुरुते बलस्य नेतारम् ।
मित्रेभ्यो लब्धधनं तदाश्रयाजीवितं धन्यम् ॥ २० ॥
जनयति विदेशनिरतं काञ्चनमुक्तादिभिर्वणिग्वृत्त्या ।
भौमः शुक्रसमेतो दशमे स्त्रीसंश्रयाद्वाऽपि ॥ २१ ॥
भौमः सौरसहायो जनयति दशमे स्थितो नरं प्रसवे ।
साहसशीलं क्षुद्रं कर्मायुक्तं रुजा[3] सहितम् ॥ २२ ॥
सधनं नरेन्द्रपूज्यं धर्मिष्ठं वृन्दनायकं ख्यातम् ।
जीवः सौम्यसहायो जनयति मेषूरणे पुरुषम् ॥ २३ ॥
सौम्यः शुक्रसहायो जनयति दशमे सुहृज्जनोपेतम् ।
विद्यास्त्रीधनसौख्यं नृपसचिवं विषयनाथं वा ॥ २४ ॥
सौम्यः सौरसहायो मृद्भाण्डकरं करोति दशमस्थः ।
ख्यातं विद्याचार्यं पुस्तकलिपिलेख्यकारं च ॥ २५ ॥
वचसां पतिः सितयुतः कर्मणि कुरुते नरेन्द्रवरभृत्यम् ।
ब्राह्मणपतिं विशोकं विद्याचार्यं समर्थं च ॥ २६ ॥
सुरराजगुरुः सार्किर्दशमे नीचं परोपकाररतम्[4] ।
कुरुते प्रवृद्धचेष्टं स्थिरास्पदं सुस्थिरारम्भम् ॥ २७ ॥
शुक्रः सौरसहायश्चित्रकरं गन्धजीविनं वैद्यम् ।
जनयति दशमे पुरुषं नीलकरं चूर्णकारं च ॥ २८ ॥

१ धीरान्. २ नृशंसं. ३ प्रजाहीनम्. ४ षण्ढं. ५ तापकरं.

रविभौमचन्द्रपुत्राश्चन्द्राद्दशमस्थिता नरं धन्यम् ।
जनयन्त्युत्तमपुरुषं नृपतिसमं सर्वजनपूज्यम् ॥ २९ ॥
रविभौमदेवपूज्या दशमस्थाने नरं सुभगम् ।
शत्रूणां हन्तारं[1] जनयन्ति समृद्धिसंयुक्तम् ॥ ३० ॥
चन्द्राद्दशमे भानुर्भूपुत्रो भार्गवश्च जनयन्ति ।
क्रूरं साहसनिरतं पुरधनकरणेऽतिनिपुणमतिम् ॥ ३१ ॥
भानुजरविभूपुत्रा दशमस्थाः क्रूरकर्मनिरतं तु ।
उत्पादयन्ति मनुजं मूढं पापं दुराचारम् ॥ ३२ ॥
रविबुधगुरवो दशमे विद्वांसं रूपसंयुक्तम् ।
उत्पादयन्ति पुरुषं धर्मिष्ठं बन्धुवल्लभं चैव ॥ ३३ ॥
बुधसूर्यभार्गवसुता यशस्विनं धार्मिकं विगतरोषम् ।
जनयन्त्यपराभूतं सौभाग्यपरिच्छदसमृद्धम् ॥ ३४ ॥
रविबुधशनयो दशमे क्रूरं चपलं नरं विशीलं च ।
उत्पादयन्ति नियतं शस्त्राग्निपरिक्षताङ्गं च ॥ ३५ ॥
रविभृगुजदेवपूज्या दशमस्थानोपगा नरं कुर्युः ।
सुभगं विद्याप्तधनं धर्मरतं भोगभागिनं नित्यम् ॥ ३६ ॥
त्रिदशगुरुमन्दसूर्या दशमे युक्ता नरं प्रकुर्वन्ति ।
प्रायेण लोकमान्यं चारित्रविलोपिनं धीरम् ॥ ३७ ॥
भार्गवरविभानुसुता दशमस्थानोपगा नरं कुर्युः ।
लोभान्वितमतिचपलं समस्तजनविप्रयुक्तं च ॥ ३८ ॥
भौमेन्दुजसुरपूज्या धर्मिष्ठं बहुकुटुम्बपरिवारम् ।
जनयन्ति दशमसंस्था विद्याधनभागिनं पुरुषम् ॥ ३९ ॥
शोभनशिल्पाभिरतान्मालाकारान्सुवर्णकारांश्च ।
कुर्युर्बुधभृगुवक्रा दशमस्थाः सर्वलोकदयितांश्च ॥ ४० ॥
भौमबुधसूर्यपुत्रा जनयन्ति तथा न[2] धर्मशीलं च ।
निद्रानिरतं प्रखलं दशमस्थानोपगा नरं मलिनम् ॥ ४१ ॥
भार्गवसुरेज्यभौमा दशमस्थानाश्रिता नरान्कुर्युः ।
धनसंयुक्तान्शूरान्देवद्विजपूजनानुरतान् ॥ ४२ ॥

१ जेतारं. २ सुधर्म.

विद्याधनजनहीनान्कापुरुषान्सौख्यवर्जितान् विकलान् ।
जीवाङ्गारकसौरा दशमे कुर्युर्नरान्नीचान् ॥ ४३ ॥
सचिवानुत्तमपुरुषान्वनधर्मरतांश्च धनिनश्च ।
भौमभृगुसूर्यपुत्राः कुर्वन्ति नराननेककर्मरतान् ॥ ४४ ॥
शुक्रबृहस्पतिसौम्या दशमे पुरुषस्य शुक्रराशिस्थाः ।
बहुविधमिष्टं कुर्युर्व्याधिं चाप्यन्यगृहसंस्थाः ॥ ४५ ॥
लिपिलेख्यकाव्यनिरतं धनवन्तं बहुविधेयभृत्यं च ।
अटनप्रियं सुरूपं बुधगुरुसौरा नरं दशमे ॥ ४६ ॥
दशमे विज्ञानयुतान्मल्लान्परदेशनिरतांश्च ।
कुर्युर्बुधभृगुरविजाः कर्मोद्युक्तं सदा दान्तम् ॥ ४७ ॥
विद्वांसं धर्मरतं दयान्वितं सत्यवन्तं च ।
भानुजगुरुभृगुपुत्रा दशमस्थानोपगा नरं कुर्युः ॥ ४८ ॥
एवं त्र्यादिषु वाच्यं जन्मनि पुंसां फलं हि कर्मोत्थम् ।
त्र्यादिग्रहसंयोगेऽत्र विशेषस्तमपि वक्ष्ये ॥ ४९ ॥
रविभौमबुधसुरेज्या दशमस्थानोपगा नरं कुर्युः ।
शूरं विक्षतगात्रं दातारं सर्वकर्मरतम् ॥ ५० ॥
वक्रार्कशुक्रसौम्याश्चन्द्राद्दशमं समाश्रिताः प्रसवे ।
कुर्युर्निर्माल्यकरान् लेख्यकरांश्चापि चित्रकर्मकरान् ॥ ५१ ॥
रविकुजबुधभानुसुता दशमस्थानस्थिताः प्रसवकाले ।
उत्पादयन्ति पुरुषं धनवाहनवारणोपेतम् ॥ ५२ ॥
रविजीवशुक्रसौम्या जनयन्ति नभःस्थिता नरान्सौम्यान् ।
कुत्सितवृत्तीनामपि सुतान्वरान्कर्षणोपेतान् ॥ ५३ ॥
रविजीवसौम्यसौरा दशमस्थानस्थिताः कुर्युः ।
पुरुषं मायानिपुणं क्रूरं परवञ्चनानुरतम् ॥ ५४ ॥
रविसितबुधभानुसुताश्चन्द्राद्दशमस्थिता नरं कठिनम् ।
उत्पादयन्ति सुभगं वाग्मिनमथ कर्षणानुरतम् ॥ ५५ ॥
रविगुरुभार्गवशनयो मेषूरणसंस्थिताः प्रसवकाले ।
उत्पादयन्ति मनुजं प्रवासशीलं विविधचेष्टम् ॥ ५६ ॥

---

१ कुर्युर्मालाकारं लेख्यकरं चापि वास्तुकर्मरतम्.

भौमसितबुधसुरेज्या जन्मनि दशमर्क्षगा नरं निपुणम् ।
उत्पादयन्ति चतुरं शूरं समरेष्वधृष्यं च ॥ ५७ ॥
भौमबुधमन्दगुरवो जन्मनि दशमस्थिता नरं मलिनम् ।
जनयन्ति नरोद्युक्तं संग्रामे रिपुविनाशकरम् ॥ ५८ ॥
भौमबुधशुक्रसौरा नभःस्थले संश्रिताः प्रसवकाले ।
विद्यावहुलं शूरं जनयन्ति नरं विशालाङ्गम् ॥ ५९ ॥
भौमगुरुशुक्रमन्दाश्चन्द्रान्मेषूरणर्क्षगाः प्रसवे ।
जनयन्ति नरं धीरं कुटुम्बयुक्तं धनोपेतम् ॥ ६० ॥
बुधगुरुभार्गवशनयो जन्मनि दशमस्थिताः कुर्युः ।
पुरुषं शान्तमनस्कं सुमेधसं लोकदयितं च ॥ ६१ ॥
पापैर्नभःस्थलस्थैः सौम्यग्रहवीक्षितैः प्रजायन्ते ।
वैद्यपुरोहितगणकाः चण्डाः परवञ्चनानुरताः ॥ ६२ ॥
एते समस्तयोगाः सौम्यग्रहवीक्षिताः प्रशस्यन्ते ।
पापग्रहदृष्टियुताः प्रायेण न भद्रकाः प्रोक्ताः ॥ ६३ ॥
पापास्तृतीयषष्ठा होरेन्दुस्थानतो नृणामिष्टाः ।
नेष्टा निधनान्त्यगता लग्नोपगता विशेषेण ॥ ६४ ॥
होराशशिनोर्बलवान्यस्तस्मात्कर्मभेन वा कथयेत् ।
यो बलयुक्तो वर्गस्तदधिपतेर्वाऽऽदिशेद्वृत्तिम् ॥ ६५ ॥
आरामपुत्र(बुद्धि)सेवाकृषिरसवणिगर्कदूतकार्येण ।
जीवन्ति नरा नित्यं मेषगणे दशमराशिस्थे ॥ ६६ ॥
वृषभगणे दशमस्थे शकटचतुष्पदविहङ्गमृगजीवी ।
धान्यादिसङ्ग्रहेण च जाङ्गलदेशे फलं प्रायः ॥ ६७ ॥
जलवर्णिजः सुसमृद्ध्या मुक्ताशङ्खप्रवालभाण्डैश्च ।
लिपिगणितलेख्यजीवी नृमिथुनवर्गे दशमसंस्थे ॥ ६८ ॥
शस्त्राग्नियोनिपोषणमुक्तासंख्योपजीवनं चैव ।
आखेटकवृत्त्या वा कर्किणि वर्गे च दशमस्थे ॥ ६९ ॥

१ सदो युक्तं. २ चन्द्रात्. ३ भाव. ४ जादि. ५ शल्यो. ६ आहिण्ड.

सन्नाहका[1] मणीनां पाषाणस्वर्णरूप्यकूटाश्च[2] ।
कर्षणनिरता लेये गोजीवा धान्यवाणिजकाः ॥ ७० ॥
शाकटिका मणिकारा हैरण्या गन्धविक्रये निपुणाः ।
गान्धर्वशिल्पलेख्यैः कन्यावर्गे सदा विभवाः ॥ ७१ ॥
प्रायोज्यानु[3]पदेशाद्धिरण्यपरिवर्त्तनाच्च मित्रांय[4] ।
जायन्ते च मनुष्या नानाव्यवहारभागिनः सततम् ॥७२॥
वाणिज्यविपणि[5]जीवा गोजीवा महिष[6]जीवाश्च ।
नानापण्यसमृद्धाः सलिलोद्भवपण्यवृत्तयः ख्याताः ॥ ७३॥
धनधान्यमूलवणिजः फलमूलकृषिबला[7]च्चैव ।
जायन्ते घटवर्गे दशमस्थानस्थिते कलावृत्ताः ॥ ७४ ॥
स्त्रीसम्पर्कजविभवा जायन्ते कर्षणानु[8]निरताश्च ।
नित्योद्युक्ताश्चोराः पृथिवीपतिसेवकाः पापाः ॥ ७५ ॥
देहचिकित्सानिरता लोहकरा जीविनोऽलिसंज्ञर्क्षे ।
वर्गे नभस्तलगते धान्यानां चोपजीविनो नित्यम् ॥ ७६ ॥
नृपसचिवदुर्गपालनगोजीवनवाजिकाष्ठशकुनैश्च ।
यन्त्रोपस्करगणितैर्जीवन्ति नराश्चिकित्सया धनुषः ॥७७॥
दशमे कुरङ्गवर्गे जलपण्यधनो भवेन्महाविभवः ।
खट्वा रामा[9]रोपणरसायनैर्वर्त्तते जातः ॥ ७८ ॥
शस्त्रदहनप्रभेदैश्चौर्येण[10] च वर्त्तते खननवृत्त्या ।
दशमे घटधरवर्गे भारवहस्कन्धबाहुबलात् ॥ ७९ ॥
शस्त्रात्सलिलाद्योनिप्रपोषणादश्वविक्रयाद्वाऽपि ।
वर्गे मीनप्रभवे दशमस्थे जायते वृत्तिः ॥ ८० ॥
दिवसकराद्यैः खस्थैः शशिहोराभ्यां भवन्त्याढ्याः ।
पितृमातृशत्रुहितजनसहजस्त्रीभृत्यवर्गेभ्यः ॥ ८१ ॥
होरागतैर्धनगतैरायगृहस्थैश्च चिन्तयेदर्थम् ।
बलसंयुतैर्ग्रहेन्द्रैरनेकधा दृष्ट[11]माचार्यैः ॥ ८२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां कर्मचिन्ताध्यायस्त्रयस्त्रिंशः ॥

---

१ संव्यूहकाः २ कुल्यानाम्. स्वर्णकूटकल्पानां. ३ दुप. ४ मित्राच्च. ५ विपण. ६ भिषज. ७ कृषीवलाश्चैव. ८ रताः ९ वामा. १० शौर्येण. ११ पृष्टम्.

# चतुस्त्रिंशोऽध्यायः ।

रविदृष्टे प्राग्लग्ने विक्रान्तस्त्रीषु रोषणः क्रूरः ।
पितृपक्षलब्धविभवो नरेन्द्रसेवी भवेज्जातः[1] ॥ १ ॥
स्त्रीणां वश्यः सुभगो दाक्षिण्यमहोदधिः प्रचुरकोशः ।
चन्द्रेक्षिते विलग्ने मार्दवजलपण्यवान् भवति ॥ २ ॥
साहससङ्ग्रामरुचिश्चण्डस्फुटबान्धवोऽतिधर्मरतः ।
उदये कुजसन्दृष्टे भवति नरः स्थूलशेभश्च ॥ ३ ॥
बुधदृष्टे प्राग्लग्ने शिल्पकलाविद्यया समभिपूर्णः ।
भवति नरो विपुलमतिः[2] कीर्तिकरो मानसंयुक्तः ॥ ४ ॥
इज्याव्रतनियमपरा नृपपूज्याः ख्यातकीर्त्तयो मनुजाः ।
लग्ने सुरगुरुदृष्टे सज्जनगुर्वतिथिसंयुक्ताः ॥ ५ ॥
वेश्यास्त्रीजनबहुलास्तरुणाः[3] सम्पन्नभोगधनसौख्याः ।
शुक्रेक्षिते विलग्ने भवन्ति मनुजाः सुरूपाश्च ॥ ६ ॥
भाराध्वरोगतप्ताः क्रुद्धा वृद्धरमणीयुता विसुखाः ।
मन्देक्षिते विलग्ने मलिना मूर्खाश्च जायन्ते ॥ ७ ॥
पश्यन् ग्रहः स्वलग्नं सर्वं विदधाति सौख्यमर्थं च ।
प्रायो नृपप्रियत्वं पापः पापं शुभं च शुभः ॥ ८ ॥
एकेनापि न दृष्टं समस्तगुणवर्जितं लग्नम् ।
स्वगृहस्वभावसहितं जनयति खलु केवलं नित्यम् ॥ ९ ॥
द्व्यादिग्रहसन्दृष्टं प्रायेण सुखार्थदं[4] भवति लग्नम् ।
एकेनापि शुभेन च न तु पापैरिष्यते सद्भिः ॥ १० ॥
सर्वैर्गगनभ्रमणैर्दृष्टे लग्ने भवेन्महीपालः ।
बलिभिः समस्तसौख्यो विगतभयो दीर्घजीवी च ॥ ११ ॥

लग्ने त्रयो विगतशोकविवर्द्धितानां
कुर्वन्ति जन्मशुभदाः पृथिवीपतीनाम् ।
पापास्तु रोगभयशोकपरिप्लुतानां
बह्वाशिनां सकललोकतिरस्कृतानाम् ॥ १२ ॥

१ प्रदूषणख्यातः. २ निपुणमति. ३ सुभगाः. ४ सुखावहं.

लग्नात् षष्ठमदाष्टमे यदि शुभाः पापैर्न युक्तेक्षिताः
मन्त्री दण्डपतिः क्षितेरधिपतिः स्त्रीणां बहूनां पतिः।
दीर्घायुर्गदवर्जितो गतभयो लग्नाधियोगे भवेत्
सच्छीलो यवनाधिराजकथितो जातः पुमान् सौख्यभाक् १३
स्वगृहोच्चसौम्यवर्गे ग्रहः फलं पुष्टमेव विदधाति।
नीचर्क्षरिपुगृहस्थो विगतफलः कीर्तितो मुनिभिः॥ १४॥

॥ इति लग्नचिन्ता॥

रविरविजभूमितनयाः कुटुम्बसंस्था विलोकनाद्वाऽपि।
कुर्वन्ति धनविनाशं क्षीणेन्दुनिरीक्षिता विशेषेण॥ १५॥
रविभौमौ धनसंस्थौ त्वग्दोषदरिद्रताकरौ कथितौ।
मन्दः कुरुते शुद्धो महार्थयुक्तं बुधेक्षितस्तत्र॥ १६॥
रविरपि वि[1]धनं जनयति यमेक्षितः शस्यतेऽन्यदृष्टश्च।
सौम्याः कुटुम्बराशौ बहुप्रकारं धनं दद्युः॥ १७॥
बुधदृष्टस्त्रिदशगुरुः कुटुम्बराशौ च निःस्वतां कुरुते।
सोमतनयोऽपि शशिना निरीक्षितो हन्ति सर्वधनम्॥१८॥
चन्द्रोऽपि धनस्थाने क्षीणोऽपि बुधेक्षितः सदा कुरुते।
पूर्वार्जितार्थनाशं निरोधमपि चान्यवित्तस्य॥ १९॥
शुक्रः कुटुम्बभवने चन्द्रेण निरीक्षितः प्रधनदाता।
सौम्यग्रहेण दृष्टः स एव धनदः सदा ज्ञेयः॥ २०॥

॥ इति धनचिन्ता॥

पापभवनं तृतीयं समस्तपापैर्युतं सहजहन्तृ[2]।
विपरीतमितः श्रेष्ठं संख्यां तेषां प्रवक्ष्यामि॥ २१॥
यावन्तो नवभागा यदागताः सहजराशौ तु।
तत्संख्यां कुर्वन्ति च दृष्टास्त्वन्यैस्तथा बहवः॥ २२॥
तत्र स्थितो रविसुतः कुजेन दृष्टो विनाशयति जातान्।
शुक्रो गुरुसंदृष्टः पुष्णाति सदैव दायादान्॥ २३॥

१ विविधं. २ सहजहन्ता.

सौम्यो भास्कर[1]दृष्टः सुहृदां परिसंक्षयं सदा कुरुते ।
भावाध्याये कथितं शेषं परिकल्पयेदत्र ॥ २४ ॥

॥ इति सहजचिन्ता ॥

सुतभवनं[2] शुभयुक्तं शुभदृष्टं वा शुभर्क्षमिह येषाम् ।
तेषां प्रसवः पुंसां भवत्यवश्यं न विपरीते ॥ २५ ॥
एकतमे गुरुवर्गे शुभराशौ[3]वौरसो भवेत्पुत्रः ।
लग्नाच्चन्द्रादथवा बलयोगाद्वीक्षितेऽपि वा सौम्यैः ॥ २६ ॥
संख्या नवांशतुल्या सौम्यांशे तावती सदा दृष्टा ।
शुभदृष्टे तद्द्विगुणा क्लिष्टा पापांशकेऽथवा दृष्टे ॥ २७ ॥
सौरर्क्षे[4] सौरगणो बुधदृष्टो गुरु[5]कुजार्कदृग्घीनः ।
क्षेत्रजपुत्रं जनयति बौधोऽपि गणो रविजदृष्टः ॥ २८ ॥
मान्दं सुतर्क्ष[6]मिन्दुर्निरीक्षिते यदि शनैश्चरेण युतम् ।
दत्तकपुत्रोत्पत्तिः क्रीतस्य बुधेन चैवं स्यात् ॥ २९ ॥
सप्तमभागे कौजे सौरयुते पञ्चमे सदा भवने ।
कृत्रिमपुत्रं विन्द्याच्छेषग्रहदर्शनान्मुक्ते ॥ ३० ॥
वर्गे पञ्चमराशौ सौरे सूर्येण वाऽत्र संयुक्ते ।
लोहितदृष्टे वाच्यो[7] जातस्य सुतो[8]द्यमप्रसवः ॥ ३१ ॥
चन्द्रे भौमांशगते धीस्थे मन्दावलोकिते भवति ।
गूढोत्पन्नः पुत्रः शेषग्रहदर्शनं[9] याते ॥ ३२ ॥
तस्मिन्नेव च भौमे शनिवर्गस्थे निरीक्षिते रविणा ।
पुरुषस्य भवति पुत्रोपविद्ध इति करुणमुनिवचनात् ॥ ३३ ॥
शनिवर्गस्थे चन्द्रे शनियुक्ते पञ्चमे सदा भवने ।
शुक्ररविभ्यां दृष्टे पुत्रः पौनर्भवो भवति ॥ ३४ ॥
चूडायदार्कसक्ता कला च तस्यैव पञ्चमे गेहे ।
रविदृष्टेऽप्यथ सहिते कानीनः सम्भवति पुत्रः ॥ ३५ ॥

---

१ आङ्गरक. २ सुतभवनमथशुभयुतं. ३ शुभराशौ सौरसो भवेत्पुरुषः, चौरसो भवेत्पुत्रः. ४ सौम्यर्क्षे. ५ नगुरुभौम. ६ शुभर्क्ष. ७ वा स्याज्जातस्य. ८ हि बीजजः पुत्रः, यतो धमः पुत्रः, सुतोधमापुत्रः. सुतोधनप्रसवः. ९ दर्शनायाते.

वर्गे रविचन्द्रमसोः सुतगेहे[1] चन्द्रसूर्यसंयुक्ते ।
शुक्रेण दृष्टिमात्रे[2] पुत्रः कथितः सहोढश्च ॥ ३६ ॥
पापैर्बलिभिर्युक्ते पापर्क्षे पञ्चमे सदा राशौ ।
जातोऽपुत्रः पुरुषः सौम्यग्रहदर्शनातीते ॥ ३७ ॥
शुक्रनवांशे तस्मिन् शुक्रेण[3] निरीक्षिते त्वपत्यानि ।
दासीप्रभवानि वदेच्चन्द्रादपि केचिदाचार्याः ॥ ३८ ॥
सितशशिवर्गे धीस्थे ताभ्यां दृष्टेऽथवाऽपि संयुक्ते ।
प्रायेण कन्यकाः स्युः समराशिगणेऽपि चान्यथा पुत्राः ॥३९
लग्नाद्दशमे चन्द्रे सप्तमसंस्थे भृगोः पुत्रे ।
पापैः पातालस्थैर्वंशच्छेत्ता भवेज्जातः ॥ ४० ॥
भौमः पञ्चमभवने जातं जातं विनाशयति पुत्रम् ।
दृष्टे गुरुणा प्रथमं सितेन न च सर्वसंदृष्टः ॥ ४१ ॥

धनजनसुखहीनः पञ्चमस्थैश्च पापै-
र्भवति विकल एव क्ष्मासुते तत्र जातः ।
दिवसकरसुते च व्याधिभिस्त्रस्तदेहः
सुरगुरुबुधशुक्रैः सौख्यसम्पद्धनाढ्यः ॥ ४२ ॥

॥ इति पुत्रचिन्ता ॥

रिपुभावे क्षितिसूनुर्मन्देन निरीक्षितो दिशति शत्रून् ।
शुभयुक्तः शुभदृष्टः शत्रुभयं चैव नात्यन्तम् ॥ ४३ ॥
क्षेत्रे[4] ग्रहेन्द्रतुल्यां संख्यां तेषां विनिर्दिशेत्प्राज्ञः ।
भावाध्यायेऽभिहितं विस्तरतश्चिन्तयेच्छेषम् ॥ ४४ ॥

॥ इति शत्रुचिन्ता ॥

शुक्रेन्दुजीवशशिजैः सकलैस्त्रिभिश्च
द्वाभ्यां कलत्रभवने च तथैककेन ।
एषां गृहेऽपि च गणेऽपि विलोकिते वा
सन्ति स्त्रियो भवनवर्गखगस्वभावाः ॥ ४५ ॥

---

१ चन्द्रसूर्ययोर्गेहे. २ दृष्ट. ३ शुक्रे दृष्टे, शुक्रसुदृष्टे बहून्यपत्यानि. ४ क्षेत्रगृहेश.

एवं क्रूरैर्नाशो लग्नाच्चन्द्राद्भवेच्च बलयोगात् ।
शशिरविजयोः कलत्रे भार्यापुंसां पुनर्भूः स्यात् ॥ ४६ ॥

भवनाधिपांशतुल्या भवन्ति नार्यो निरीक्षणाद्वाऽपि ।
एकैवरविकुजांशे गुरुबुधयोश्चापि यामित्रे ॥ ४७ ॥

प्रायेण चन्द्रसित[1]योर्वर्गे युक्तेऽथवापि जामित्रे ।
दृष्टे वा बहुपत्न्यो भवन्ति शुक्रे विशेषेण ॥ ४८ ॥

गुरुशुक्रयोः [2]स्ववर्णा रविकुजशशिभानुजैर्भवन्त्यूनाः ।
शुक्रे वेश्याप्रायश्चन्द्रेऽपि वदन्ति केतुमालाख्याः ॥ ४९ ॥

भौमे कलत्रसंस्थे [3]नित्यं वियुतो भवेत्तदापुरुषः ।
[4]म्रियते वाशनिदृष्टे योषिदवश्यं न दृष्टेन्यैः ॥ ५० ॥

द्यूने कुजभार्गवयोर्जातः पुरुषो भवेद्विकलदारः ।
धीधर्मस्थितयोर्वा परिकल्प्यं पण्डितैरेवम् ॥ ५१ ॥

[5]लग्नाद्व्ययरिपुगतयोः [6]शशाङ्कभान्वोः वदन्ति पुरुषस्य ।
प्रभवं समस्तमुनयः क्रमेण पत्न्या सहैकतनयस्य ॥ ५२ ॥

लग्नस्थे रवितनये गण्डान्ते भार्गवे कलत्रगते ।
वन्ध्यापतिस्तदा स्याद्यदि न सुतर्क्षं शुभैर्युक्तम् ॥ ५३ ॥

लग्न[7]व्ययदशमस्थैः पापैः क्षीणे निशाकरे धीस्थे ।
स्त्रीहीनो भवति नरः पुत्रैश्च विवर्जितो नूनम् ॥ ५४ ॥

यमभूमिजयोर्वर्गे द्यूनस्थे तदवलोकिते शुक्रे ।
जातो भवत्यवश्यं पत्न्या सह पुंश्चलः पुरुषः ॥ ५५ ॥

बुधभार्गवयोरस्ते स्त्रीहीनो जायते ह्यपुत्रश्च ।
दृष्टे शुभैश्च वाच्याः परिणतवयसः सदा प्रमदाः ॥ ५६ ॥

भार्गववाक्पतिसौम्यैः प्रमदाभवने शशाङ्कयुक्तैश्च ।
एकैकेनैतेषां पुरुषस्य विभूतयो [8]बहुलाः ॥ ५७ ॥

॥ इति कलत्रचिन्ता ॥

---

१ वर्गयुतेभे, बलयुक्तेवा. २ सवर्णा. ३. नित्यवियुक्तो. ४ मास्यतिमन्ददृष्टे. ५ लग्नव्ययषष्ठगयोः ६ शनिभार्गवयोः, शशिभास्करयोर्वदन्ति ७ व्ययमदनस्थैः ८ विपुलाः

रविदृष्टे युक्ते वाऽप्यायक्षेत्रे भवेत्सदा नृपतेः ।
भवति धनं युद्धाद्यैश्चोरैधनचतुष्पदाद्यैश्च ॥ ५८ ॥
स्त्रीजनहस्तिप्रायं शशाङ्कवर्गे शशीक्षिते युक्ते ।
क्षीणे क्षयोऽथ पूर्णे वृद्धिः स्यादायगे वृत्तेः ॥ ५९ ॥
हेमप्रवालभूषणमाणिक्यधनं कुजे भवेदेवम् ।
साहसगमनागमनैः पावकशस्त्रैश्च वक्तव्यम् ॥ ६० ॥
आये बुधेऽपि वर्गे दृष्टे युक्तेऽथवा भवेन्नित्यम् ।
शिल्पादिलेख्यकाव्यैर्युक्तिप्रायं तथा सुतराम् ॥ ६१ ॥
नगरजनैर्योगभोगैः क्रतुभिश्च तथा विशिष्टपुण्यैश्च ।
हेमप्रायं वित्तं जीवे पितुरङ्गमाकीर्णम् ॥ ६२ ॥
वेश्यास्त्रीसंयोगैर्गमनागमनैर्धनं भवति पुंसाम् ।
आये सितेऽपि चैवं मुक्तारजतादि भूयिष्ठम् ॥ ६३ ॥
नगरपुरवृन्दयोगैः स्थावरकर्मक्रियाभिरपि वित्तम् ।
लोहखरवृंदबहुलं रविजेऽपि तथाऽस्यवर्गे च ॥ ६४ ॥
एवं फलनिर्देशः सौम्यैर्दृष्टे विशेषतो वाच्यः ।
क्रूरैश्च समुपघातो मिश्रैर्मिश्रस्तदा पुंसाम् ॥ ६५ ॥
सर्वग्रहयुतदृष्टे बहुप्रकारेण निर्दिशेद्वित्तम् ।
बलवान्यस्तत्र भवेदतिरिक्तं सम्प्रयच्छति च ॥ ६६ ॥
मित्रस्वगृहगतोर्द्धं स्वोच्चे पूर्णं तथास्तगः किञ्चित् ।
शत्रुगृहस्थश्चरणं ददाति विहगस्तदाये तु ॥ ६७ ॥
आजन्मतो नराणां भवति धनं निश्चितं यवनवृद्धैः ।
क्षितिपतिमाण्डलिकानामपरिमितं प्राह लोकाक्षः ॥ ६८ ॥

॥ इत्यायचिन्ता ॥

भानौ क्षीणे चेन्दौ व्ययभवने भूपतिर्हरति वित्तम् ।
भौमे बुधसंदृष्टे बहुप्रकारो भवेन्नाशः ॥ ६९ ॥

---

१ वन. २ जल. ३ थ युते. ४ यानयोगैः ५ सुते. ६. महिषबहुलं. ७ सदा च भवे, सदाये तु.

गुरुचन्द्रदानवेज्या व्ययभवने वित्तपोषणं कुर्युः ।
भूमितनयेन दृष्टा भावाध्यायोक्तमन्यच्च ॥ ७० ॥

॥ इति व्ययचिन्ता ॥

लग्ने बुधद्रेक्काणे शशिना दृष्टे चतुष्टयस्थाने ।
जातो नृपतिकुलेष्वपि शिल्पी स्यान्निश्चितं मुनिभिः ॥ ७१ ॥
नीचे सौरनवांशे शुक्रेऽन्त्ये रविशशाङ्कयोर्मदने ।
मन्देन विलोकितयोर्माता दासी महाकुलेऽपि स्यात् ॥७२॥
सूर्याद्द्वितीयराशौ भास्करतनये खमध्यगे चन्द्रे ।
भौमे सप्तमभवने विकलोऽस्मिन्सर्वदा जातः ॥ ७३ ॥
मध्ये पापग्रहयोश्चन्द्रे मदनस्थितेऽर्कजे जन्तोः ।
श्वासक्षयविद्रधिना गुल्मप्लीहा[2]तिपीडितस्सु[3]भगः ॥ ७४ ॥
सूर्यांशे यदि चन्द्रश्चन्द्रांशे भास्करो य[4]दि श्लेष्मी ।
स[5]ममेकराशिगतयोर्दुर्बलदेहः सदा पुरुषः ॥ ७५ ॥
निधनधनारिव्ययगा रविचन्द्रकुजार्कजा नि[6]यतम् ।
नयनविघातं कुर्युर्बलवद्ग्रहदोषसंभूतम् ॥ ७६ ॥
धर्मायसहजसुतगाः पापाः सौम्यैर्न वीक्षिता जन्तोः ।
श्र[7]वणविनाशं कुर्युः सप्तमसंस्थाश्च दन्तानाम् ॥ ७७ ॥
उदये दिनकरपुत्रे त्रिकोणभ[8]वने कुजे च सोन्माद[9]ः ।
क्षीणे शशिनि ससौरे याते वा व्ययगृहे जातः ॥ ७८ ॥

इति कल्याणवर्मविरचितायां सारावल्यां लोकयात्रा नाम चतुस्त्रिंशोऽध्यायः ॥

## पञ्चत्रिंशोऽध्यायः ।

राजोपयोगिशास्त्रं यस्मात्प्रभवो विशेषतस्तेषाम् ।
सञ्चिन्त्या नृपयोगास्तानेवाहं प्रवक्ष्यामि ॥ १ ॥
स्वोच्चत्रिकोणगृहगैर्बलसंयुतैश्च
त्र्याद्यैर्नृपो भवति भूपतिवंशजातः ।

---

१ दृक्का. २ प्लीहादि. ३ स्यभवः. ४ यदा शोषी. ५ एकतर. ६ यथायोगं
७ नयन. ८ मदने. ९. वातः.

पञ्चादिभिर्जनपदप्रभवोऽपि सिद्धो
हीनैः क्षितीश्वरसमो न तु भूमिपालः ॥ २ ॥
अशुभगगनवासैः स्वोच्चगैः क्रूरचेष्टं
कथयति यवनेन्द्रो भूपतिं विक्रमोत्थम् ।
न तु भवति नरेन्द्रो जीवशर्मोक्तपक्षे
भवति नृपतियोगैः सत्कृतो राष्ट्रपालः ॥ ३ ॥
एष्विह भवन्त्यवश्यं भूपतियोगेषु नीचकुलपुरुषाः ।
तानग्रतः प्रवक्ष्ये यथामतं शास्त्रकाराणाम् ॥ ४ ॥
स्वोच्चस्थै रविभौमसौरगुरुभिः सर्वैस्त्रिभिश्चैकगैः
लग्ने षोडशवृद्धतापसगणैः सन्दर्शिताः पार्थिवाः ।
द्वाभ्यां चैकतमोदये स्वभवने चन्द्रे पुनः षोडशः
सर्वो नीचकुलोद्भवोऽपि वसुधां पात्येव वाटीमिव ॥ ५ ॥
गणोत्तमे लग्ननवांशकोद्गतो निशाकरश्चापि गणोत्तमेऽथवा ।
चतुर्ग्रहैश्चन्द्रविवर्जितैस्तदा निरीक्षितस्यादधमोद्भवो नृपः॥६
उदयगिरिनिविष्टैर्मेषसंस्थैर्ग्रहेन्द्रैः
शशिरुधिरसुरेड्यैर्जायते पार्थिवेन्द्रः ।
जलनिधिरशनायाः पालकः सर्वभूमे-
र्हतरिपुपरिवारः सर्वतः फूत्करोति ॥ ७ ॥
स्वोच्चे गुराववनिजे क्रियगे विलग्ने
मेषोदये च सकुजे वचसामधीशे ।
भूपो भवेदिह स यस्य विपक्षसैन्यं
तिष्ठेत जातु पुरतः सचिवा वयस्याः ॥ ८ ॥
निशाभर्ता चाये भृगुतनयदेवेड्यसहितः
कुजः प्राप्तः स्वोच्चे मृगमुखगतः सूर्यतनयः ।
विलग्ने कन्यायां शिशिरकरसूनुर्यदि भवेत्
तदाऽवश्यं राजा भवति बहुविज्ञानकुशलः ॥ ९ ॥
स्वर्क्षे नक्षत्रनाथः स्फुटकरनिकरालङ्कृतः प्राप्तलग्नो
द्यूने सोमस्य पुत्रो यदि रिपुभवनं भास्करः संप्रयातः ।

१ जनपदेऽपि वदन्ति. २ मे. ३ पात्येक. ४ द्वमे. ५ भवेन्नृपः ६ तिष्ठेन्न.

पाताले दानवेज्यो गुरुरपि गगने सौरभौमौ तृतीये
सद्भूपालो भवेद्यः शशिकरधवलं चामरं राजलक्ष्मीम्॥१०॥
वर्गोत्तमगते चन्द्रे लग्ने वा चन्द्रवर्जिते ।
चतुराद्यैर्ग्रहैर्दृष्टे जातो नरपतिर्भवेत् ॥ ११ ॥
शिशिरकिरणे स्वोच्चे लग्ने पयोम्बुनिधेः समे
घटधरगते भानोः पुत्रे मृगाधिपतौ रविः ।
अलिगृहगतो वाचांनाथः स्फुरत्कर राजितो
यदि नरपतिः स्फीतश्रीकस्तदा बहुवाहनः ॥१२॥
मृगे मन्दे लग्ने कुमुदवनबन्धुश्च तिमिग-
स्तथा कन्यां त्यक्त्वा बुधभवनसंस्थः कृतनयः ।
स्थितो नार्यां सौम्यो धनुषि सुरमन्त्री यदि भवेत्
तदा जातो भूपः सुरपतिसमः प्राप्तमहिमा॥ १३ ॥
उदयति मीने शशिनि नरेन्द्रः सकलकलाढ्यः क्षितिसुत उच्चे।
मृगपतिसंस्थे दशशतरश्मौ घटधरगे स्याद्दिनकरपुत्रे ॥ १४॥
कुजे विलग्ने च शशी यदाऽस्ते स्फुटांशुसम्भारविराजिताङ्गः ।
राजा तदा शत्रुभिरप्रधृष्यो वेदार्थविद्धेतुशतानुवादैः[1] ॥ १५ ॥
करोत्युत्कृष्टोद्यद्दिनकृदमृताभीशुसहितः
स्थितस्ताद्यग्रूपं सकलनयनानन्दजननः ।
अपूर्वोऽयं स्मृत्या नयनजलसिक्तोऽपि सततं
रिपुस्त्रीशोकाग्निर्ज्वलति हृदयेऽतीव सुतराम् ॥ १६ ॥
शुक्रो घटे कुजो मेषे स्वोच्चे देवपुरोहितः ।
यदि राजा भवेन्नूनं स्वयशोधौतदिङ्मुखः॥ १७ ॥
उदयति गुरुरुच्चे तप्तहेमप्रभावो
हरिततुरगनाथो व्योममध्यावगाही ।
गवि शशिबुधशुक्रा यस्य सूतौ नरस्य
स्वभुजविजितभूमिः सर्वतः पार्थिवेन्द्रः ॥ १८ ॥

---

१ सदानुभावैः.

धनुषि सुरेज्यः शशभृदुपेतो मृगमुखसंस्थः क्षितितनयश्च ।
उदयति तुङ्गे सुररिपुवन्द्यः शशितनयो वा यदि नृपतिः स्यात् १९
चापार्द्धे भगवान् सहस्रकिरणस्तत्रैव ताराधिपः
लग्ने भानुसुतोऽतिवीर्यसहितः स्वोच्चे च भूनन्दनः ।
यद्येवं भवति क्षितेरधिपतिः सञ्चिन्त्य शौर्यं भयात्
दूरादेव नमन्ति यस्य रिपवो दग्धाः प्रतापाग्निना ॥ २० ॥
षष्ठं द्यूनमथाष्टमं शिशिरगोः प्राप्ताः समस्ताः शुभाः
क्रूराणां यदि गोचरे न पतिता भान्वालयाद्दूरतः ।
भूपालः प्रभवेत्स यस्य जलधेर्वेलावनान्तोद्भवैः
सेनामत्तकरीन्द्रदानसलिलं भृङ्गैर्मुहुः पीयते ॥ २१ ॥
न प्राप्नोति जरामाशु नो भजत्यरितो भयम् ।
जातः स्यादधियोगेऽस्मिन् धृतिसौभाग्यसौख्यभाक् ॥२२॥
बुधः स्वोच्चे लग्ने तिमियुगलगावीज्यशशिनौ
मृगे मन्दः सारो ज्ञुतुभगृहगो दानवसुहृत् ।
य एवं कुर्यात् स क्षितिभृदहितध्वंसनिरतो
निरालोकं लोकं चलितगजसङ्घातरजसा ॥ २३ ॥
केसरिगो महेन्द्रसचिवो दिनकरसहितः
कुम्भगतोऽर्कजः शशधरः खलु भवति वृषे ।
वृश्चिकभे क्षितेस्तु तनयो मिथुन इन्दुसुतो
मेषलग्नसमुदयो यदि स तु मनुजपतिः ॥ २४ ॥
कार्मुके त्रिदशनायकमन्त्री भानुजो वणिजि चन्द्रसमेतः ।
मेषगस्तु तपनो यदि लग्ने भूपतिर्भवति सोतुलकीर्तिः ॥ २५ ॥
स्वर्क्षात्[1] केन्द्रेषु यातैर्गुरुबुधभृगुजैर्मन्दभान्वारयुक्तैः
स्वोच्चे चन्द्रोऽधितिष्ठन् जनयति नृपतिं कीर्त्तिशुक्लीकृताशम् ॥
अत्युच्चे लग्नसंस्थो रविरपि भगवान् पार्थिवं क्रूरचेष्टं
यातायातैः समस्तं[2] चतुरुदधिजलं यस्य सेनाः पिबन्ति ॥ २६ ॥

---

१ स्वर्क्षे. २ समन्ताच्च.

उदकचरनवांशकेषु षष्ठः कमलरिपुः सकलाभिराममूर्तिः ।
उदयति विहगे शुभे स्वलग्ने भवति नृपो यदि केन्द्रगा न पापाः२७

आपूर्णमण्डलकलाकलितं शशाङ्कं
पश्यन्ति शुक्रसुरपूजितसोमपुत्राः ।
लग्नाधिपोऽतिबलवान् पृथिवीश्वरः स्यात्
वर्गोत्तमश्च नवमः खलु चेद्विलग्ने ॥ २८ ॥

वर्गोत्तमे त्रिप्रभृतिग्रहेन्द्राः केन्द्रस्थिता नो शुभसंयुताश्च ।
नोरूक्षधूमो न विवर्णदेहाः कुर्वन्ति राज्ञः प्रसवं प्रसन्नाः ॥ २९ ॥

एक एव खगः स्वोच्चे वर्गोत्तमगतो यदि ।
बलवान् मित्रसंदृष्टः करोति पृथिवीपतिम् ॥ ३० ॥

शीर्षोदयर्क्षेषु गताः समस्ता नीचारिवर्गे स्वगृहे शशाङ्कः ।
सौम्येक्षितोऽन्यूनकलो विलग्ने दद्यान्महीं रत्नगजाश्वपूर्णाम् ॥३१

उपचयगृहसंस्थो जन्मपो यस्य चन्द्रात्
शुभगृहमथवांशे केन्द्रयाताश्च सौम्याः ।
सकलबलवियुक्ता ये च पापाभिधानाः
स भवति नरनाथः शक्रतुल्यो बलेन ॥ ३२ ॥

अत्युच्चस्था रुचिरवपुषः सर्व एव ग्रहेन्द्राः
मित्रैर्दृष्टा यदि रिपुदृशां गोचरं न प्रयाताः ।
कुर्युर्नूनं प्रसभमरिभिर्गर्जितैर्वारणाद्यैः
सेनाश्वीयैश्चलति चलितैर्यस्य भूः पार्थिवेन्द्रम् ॥ ३३ ॥

परमोच्चे स्थितश्चन्द्रो यदि शुक्रेण दृश्यते ।
कुर्यान्महीपतिं पूर्णं पापैरापोक्लिमोपगैः ॥ ३४ ॥

दृश्येते शुभदैः स्वकेन्द्रभवने मित्रैश्च पापैस्तथा
युद्धे नो रिपुभिर्जितौ बलयुतौ जन्मोदयर्क्षाधिपौ ।
भूपः स्यान्निजराशिनाथनवमे चन्द्रोदये चेद्यशो
यस्येभस्रुतदानलुब्धमधुपैश्चातुर्दिशं गीयते ॥ ३५ ॥

उच्चराशिर्भवेद्धोरा यस्यासौ कुरुते नृपम् ।

---

१ सुखस्थः. २ ग्रहः. ३ सौम्येक्षितःपूर्णकलो.

स्वांशेऽथ सुहृदुच्चांशे दृष्टः केन्द्रोपगैः शुभैः ॥ ३६ ॥

स्थितो भानोः पुत्रो विरचितबलः पश्चिमार्द्धे मृगस्य
रविः सिंहे शुक्रस्तुलिनि रुधिरो मेषगः कर्किणीन्दुः ।
कुमारीं सम्प्राप्तो यदि भवति वा शर्वरीनाथसूनुः
प्रजातो भूपालश्छ[1]दयति महीमेकशुक्लातपत्राम् ॥ ३७ ॥

वर्गोत्तमस्वभवनेषु गता ग्रहेन्द्राः
सर्वे यदा रुचिररश्मिशिखाकलापाः ।
उत्पद्यते जगति सीममतीं धरित्रीं
यः पालयेत् क्षितिपतिर्जितशत्रुप[2]क्षः ॥ ३८ ॥

केन्द्रे विलग्ननाथः सुहृद्भिरभिवीक्षितो वि[3]हगैः ।
लग्नस्थिते च सौम्ये भूपतिरिह जायते पुं[4]रुषः ॥ ३९ ॥

सुरपतिगुरुः सेन्दुर्लग्ने वृषे समवस्थितो
यदि बलयुतो लग्नेशश्च त्रिकोणगृहं गतः ।
रविशनिकुजैर्वीर्योपेतैर्न युक्तनिरीक्षितो
भवति स नृपः कीर्त्या युक्तो हताखिलकण्टकः ॥४०॥

न नीचगृहसंस्थिता न च रिपोर्गृहं संगताः
स्वराशिमथवांशकानुदयगोच्चमंशं यदि ।
कलाभिरतिभूषिते कुमुदषण्डबोधप्रदे
सुहृद्भिरभिवीक्षिताः क्षितिपतिं विदध्युर्ग्रहाः ॥ ४१ ॥

यो यः पूर्णं शिशिरकिरणं प्राप्तवर्गोत्तमांशं
सुस्पष्टार्चिर्गगनगमनः पश्यति स्वोच्चसं[5]स्थम् ।
स क्षोणीशं जनयति दशां प्राप्य सौम्यः स्वकीयां
ख्यातं लोके यदि बलयुताः कण्टकस्था न पापाः ॥४२॥

जन्मोदयभवनपती बलसहितौ केन्द्रभेऽथ हिबुके वा ।
इन्दुर्जलगृहगश्चेत् त्रिकोणगो वा महीपालः ॥ ४३ ॥

स्वगृहे मित्रभागेषु स्वांशे वा मित्रराशिषु ।
कुर्वन्ति च नरं सूतौ सार्वभौमं नराधिपम् ॥ ४४ ॥

---

१ श्छिरमवतिगामेक. २ वर्गः. ३ विहगनाथैः. ४ नियतम्. ५ संस्थः.

परमोच्चगताः सर्वे स्वोच्चांशे यदि सोमजः।
त्रैलोक्याधिपतिं कुर्युर्देवदानववन्दितम्॥ ४५॥
यस्योत्तरस्यां भगवान् वसिष्ठो बृहस्पतिः प्रागपरे च भार्गवः।
अगस्त्यनामा खलु दक्षिणस्यां स नष्टशत्रुश्च भवेन्नराधिपः॥४६॥
शशी पूर्णः स्वांशं स्वगृहमथवा स्वोच्चभं वा प्रयातो
दिवः पातुर्मन्त्री दितिजगुरुणा वीक्षितः केन्द्रसंस्थः।
रविर्लग्ने स्वांशं यदि बलयुतः पश्यति स्यात्स भूपः
प्रभग्नं यस्येभैश्चतुरुदधिभूशल्लकीनामरण्यम्॥ ४७॥
कुमुदगहनबन्धौ वीक्ष्यमाणे समस्तैः
गगनगृहनिवासैर्दीर्घजीवी नरः स्यात्।
फलमशुभसमुत्थं नैव केमद्रुमोत्थं
भवति मनुजनाथः सार्वभौमो जितारिः॥ ४८॥
उच्चाभिलाषी सविता त्रिकोणे स्वर्क्षे शशी जन्मनि यस्य जन्तोः।
स शास्ति पृथ्वीं बहुरत्नपूर्णां बृहस्पतिः कर्कटके[1] यदि स्यात्॥४९॥
तुङ्गेषु षड्विबुधमार्गचरा उपेताः
स्वांशे मयूखनिकरैः परिपूरिताङ्गाः[2]।
उत्पादयन्ति कुलिशाङ्कितपाणिपादं
पृथ्वीपतिं सगरवेणययातितुल्यम्॥ ५०॥
शुभभवनसमेतैः सौम्यभागेषु सौम्यैः
स्फुटरुचिरकरौघैः प्रस्फुरद्भिर्विलग्ने।
रविमुषितमयूखैस्तैश्च पापैरमिश्रै-
र्गिरिगहननिवासी तापसः स्यान्नरेन्द्रः॥ ५१॥
शुभफणपरगाः[3] शुभप्रदा उभयगृहे यदि पापसंचयः।
स्वभुजहतरिपुर्महीपतिः सुरगुरुतुल्यमतिः प्रकीर्त्तितः॥५२॥
विलग्ननाथः खलु लग्नसंस्थः सुहृद्गृहे मित्रदृशां पथि स्थितः।
करोति नाथं पृथिवीतलस्य दुर्वारवैरिघ्नमिहोदये शुभे॥ ५३॥
सम्पूर्णमूर्तिर्भगवान् शशाङ्को मेषांशकस्थो गुरुणा च दृष्टः।
नीचेन कश्चिन्न च वीक्षितोऽन्यैः प्राह क्षितीशं यवनाधिराजः॥५४॥

---

१ कर्कटकोपगश्चेत्. २ परिपूरिताशाः. ३ इह.

लग्नाच्छशी त्रिरिपुलाभनभःस्थलेषु
सूतावखण्डितवपुः पृथिवीश्वरः स्यात् ।
दृष्टः सुरेन्द्रगुरुणा न च वीक्षितोऽन्यै-
र्जन्माधिपो दशमगः स्मरगोऽथवा स्यात् ॥ ५५ ॥

बिभ्रद्रश्मिकरालपूर्णपरिधिर्नक्षत्रसम्पालकः
तुङ्गांशे समवस्थितैश्च सकलैः प्रोद्वीक्षितो व्योमगैः ।
कुर्याद्भूमिपतिं यशस्यचरितं हस्त्यश्वसैन्यं जगत्
योव्याच्छेषफणीन्द्रतुल्यमखिलोर्वीभारखिन्नः श्वसन् ॥५६॥

सुधामृणालोपमबिम्बशोभितः शशी नवांशे नलिनीप्रियस्य ।
यदि क्षितीशो बहुहस्तिपूर्णः शुभाश्च केन्द्रेषु न पापयुक्ताः ॥५७॥

शशिबुधरुधिराङ्गैः स्वांशकस्थैर्न नीचैः
व्ययगृहसहजस्थैर्नापि सूर्यप्रविष्टैः ।
तनयभवनसंस्थे वाक्पतौ चन्द्रयुक्ते
भवति मनुजनाथः कीर्तिशुक्लीकृताशः ॥ ५८ ॥

नीचारिवर्गरहितैर्विहगैस्त्रिभिस्तु
स्वांशोपगैर्बलयुतैः शुभदृष्टिदृष्टैः ।
गोक्षीरशङ्खधवलो मृगलाञ्छनश्च
स्याद्यस्य जन्मनि सभूमिपतिर्जितारिः ॥ ५९ ॥

कुमुदगहनबन्धुं श्रेष्ठमंशं प्रपन्नं
यदि बलसमुपेतः पश्यति व्योमचारी ।
उदयभवनसंस्थः पापसंज्ञो न चैवं
भवति मनुजनाथः सार्वभौमः सुदेहः ॥ ६० ॥

जलचरराशिनवांशक इन्दौ तनुभवने शुभदः स्वकवर्गे ।
अशुभकरः खलु कण्टकहीनो भवति नृपो बहुवारणनाथः ॥६१॥

वर्गोत्तमे हिमकरः सकलस्थितोंऽशे
कुर्यान्महीपतिमपूर्वयशोभिरामम् ।
यस्याश्ववृन्दखुरघातरजोभिभूतो
भानुः प्रभातशशिनोऽनुकरोति रूपम् ॥ ६२ ॥

सर्वग्रहकृते योगे चक्रवर्तीश्वरो भवेत् ।
एकैकेन तथा जाता मण्डलानामधीश्वराः ॥ ६३ ॥
एकोऽपि विहगः कुर्यात् पञ्चमांशगतो नृपम् ।
समस्तबलसम्पन्नश्चक्रवर्तिनमेव च ॥ ६४ ॥
यदि पश्यति चन्द्रमसं विबुधगुरुर्वृषभसंस्थितः[1] प्रसवे ।
अवति पृथिवीमुदग्रां स्फुरन्मणिद्योतितदिगन्ताम् ॥ ६५ ॥
कुर्यात्तुङ्गे त्रिकोणे वा स्वराशिस्थो विलोकयन् ।
ग्रहस्तुषारकिरणं निषादमपि पार्थिवम् ॥ ६६ ॥
स्वगृहे तृतीयभागे शशी स्थितः पार्थिवं यदा कुरुते ।
परिपूर्णबलः शुभदो यदि प्रसूतौ महाराजम् ॥ ६७ ॥
स्वांशे दिवाकरो यस्य स्वक्षेत्रे च क्षपाकरः ।
स राजा गजदानौघशीकरोक्षितभूतलः ॥ ६८ ॥
लग्ने रविपुत्रसंयुते[2] देवेज्येऽस्तगतेनवोदिते[3] ।
दृष्टेऽसुरराजमन्त्रिणा ग्रामीणो नृपतिर्भवेदिह ॥ ६९ ॥
उदयेऽसुरमन्त्रिवरो गुरुभे गुरुदृष्टिपथं च गतः ।
कुरुते नियतं सनृपं यदि तुङ्गगतश्च बुधः ॥ ७० ॥
शुक्रभास्करेन्दवो भार्वमेकमाश्रिताः[4] ।
जीवदृष्टमात्रकाः स्यात्तदा महीपतिः ॥ ७१ ॥
लग्नगाः सितशशाङ्कजभौमाः सप्तमे शशिनि वाक्पतियुक्ते ।
तिग्मरश्मितनयेन च दृष्टे जायते पृथुयशाः पृथिवीशः ॥ ७२ ॥
विबुधगुरुर्यदि भौमनवांशे रुधिरनिरीक्षितपूर्णबलश्च ।
जनयति कुत्सितजन्ममहीपं क्रियपरिसंस्थितकर्मगतोऽर्कः॥७३॥
तृतीयगाः शुक्रशशाङ्कभास्कराः कुजोऽस्तसंस्थो नवमे बृहस्पतिः ।
गणोत्तमो लग्नगृहांशकोद्गमो यदा तदा हीनकुलो महीपतिः ॥७४॥
जीवो बुधो भृगुसुतोऽथ निशाकरो वा
धर्मे विशुद्धतनवः स्फुटरश्मिजालाः ।
मित्रैर्निरीक्षितयुता यदि सूतिकाले
कुर्वन्ति देवसदृशं नृपतिं महान्तम् ॥ ७५ ॥

---

१ संस्थितं. २ सितयुक्ते. ३ गृहेनचोदिते. ४ भाग.

तपोगृहं यस्य भवेत्तदुच्चकं ग्रहेण तेनाथ युतं निरीक्षितम् ।
ग्रहद्वयं स्वोच्चगतं यदा भवेत्तदा कुटुम्बी नियतं महीपतिः॥७६॥
सुतभवने शशिदेवनमस्यौ[1] भवनपतिप्रसमीक्षितदेहौ[2] ।
भृगुतनयो यदि मीनसमेतो भवति नृपः खलु कुत्सितवंशः॥७७॥
चन्द्रस्त्रिपुष्करस्थः स्वोच्चे वचसां पतिः सलक्ष्मीकम् ।
उत्पादयति स्वामिनमुत्तमपात्रं[3] समग्रभुवः ॥ ७८ ॥
केन्द्रस्वोच्चमुपेतः सुरमन्त्री दशमगो यदा शुक्रः ।
नूनं स भवति पुरुषः समस्तपृथ्वीश्वरः ख्यातः ॥ ७९ ॥
स्वर्क्षे शशी[4] विपुलरश्मिशिखाकलापाः
स्वांशे स्थिता बुधबृहस्पतिदानवेज्याः ।
पातालगा दिनकरेण निरीक्षिताश्च
संसूचयन्ति नृपतिं द्विजमुख्यजातम् ॥ ८० ॥
रविर्नभस्थः स्वत्रिकोणगोऽपि वा स्वराशिसंस्थाः सितजीवचन्द्राः ।
तृतीयषष्ठायगताश्च चन्द्रात्कुर्वन्ति गोपालमिह क्षितीशम् ॥ ८१ ॥
सप्तमभवने सौम्या मित्रांशगताः सुहृद्भिरिह दृष्टाः ।
उच्चे कुजो यदि नृपः समस्तनृपपालकः श्रेष्ठः ॥ ८२ ॥
रविशशिबुधशुक्रै[6]र्व्योम्नि मित्रांशकस्थै-
र्न च रिपुभवनस्थैर्नाप्यदृश्यैर्न नीचैः ।
स तपसि भृगुपुत्रे भूपतिः स्यात्प्रयाणे
गजमदजलसेकैर्लीयते[7] यस्य रेणुः ॥ ८३ ॥
स्वोच्चे भानुः प्रकटितबलो व्योममध्ये सजीवः
शुक्रो धर्मे यदि बलयुतः[8] स्वं नवांशं प्रपन्नः ।
लग्ने वर्गे शुभगगनगो राजपुत्रेण दृष्टः
पृथ्वीपालो धवलितजगत्स्यात् सितैः स्वैर्यशोभिः ॥८४॥
वृषे शशी लग्नगतः सुपूर्णः सितेन दृष्टो वणिजि स्थितेन ।
बुधोऽपि पातालगतो यदि स्यात्तदान्यजातो भवति क्षितीशः॥८५

---

१ यदि देवनमस्यो २ देहः. ३ नतमनसं. ४ शनिः, यदा. ५ नृप. ६ वक्रै. ७ विंध्यते. ८ कुज युतः.

क्षमासुतः स्वोच्चमुपाश्रितो यदा[1]
रवीन्दुवाचस्पतिभिर्निरीक्षितः।
भवेन्नरेन्द्रो यदि कुत्सितस्तदा
समस्तपृथ्वीपरिरक्षणे क्षमः॥ ८६॥

जायतेऽभिजिति[2] यः शुभकर्मा
भूपतिर्भवति सोऽतुलवीर्यः।
नीचवेश्मकुलजोऽपि नरोऽस्मिन्
राजयोग इति न व्यपदेशः[3]॥ ८७॥

गण्डान्तविष्टिपरिघव्यतिपातजात-[4]
स्ताराधिपः समुदये यदि कृत्तिकायाम्।
क्रीडेत् कृपाणफलकाहितचण्डवेग-
प्रोत्थापिताहितशिरो गुलिकाभिरीशः॥ ८८॥

बुधोदये सप्तमगे बृहस्पतौ
चन्द्रे कुलीरे सुखराशिगेऽमले।
वियद्गते भार्गवनन्दने गृहे
प्रशास्ति पृथ्वीं मनुजो निराकुलः॥ ८९॥

एकान्तरगैर्विहगैः षड्भिश्चक्रे क्षितीश्वरं कुर्यात्।
अत्रैव शुभे लग्ने सकलमहीपालको नृपतिः॥ ९०॥

अयमेवसमुद्राख्यो द्वौ लग्ने यदि संस्थितौ।
करोति[5] भूभुजां नाथं सौम्यैः केन्द्रेषु संस्थितैः॥ ९१॥

निरन्तरं यदि भवनेषु षट्सु
ग्रहाः स्थिता उदयगृहात् समस्ताः।
स्वपङ्क्तिदन्नरपतिमेव कुर्यु-
श्चतुष्टयान्नरपतिमन्त्रिणं च॥ ९२॥

सुतसुखदुश्चिक्यगता यदि कर्मणि कीर्त्तयन्ति यवनाद्याः।
बन्धुसुतार्थगजाढ्यो बहुभृत्यो जायते क्षितिपः॥ ९३॥

कर्मास्तजलहोरासु ग्रहाः सर्वे प्रतिष्ठिताः।
कुर्वन्ति नगरं नाम यत्र स्यात्पृथिवीपतिः॥ ९४॥

---

१ बली. २ जगति. ३ सव्यपदेशः. ४ वैधृतगृह. ५ स करोति भुवो.

सुखतनुमदगाः शुभाः समग्राः
कुजरविरविजास्त्रिधर्मलाभसंस्थाः ।
यदि भवति महीपतिः प्रशान्तो
यवनपतिकृतो ह्ययं महीपयोगः ॥ ९५ ॥
लाभधर्मस्थिताः सौम्याः पापाः कर्मणि संस्थिताः ।
नृपतीनामयं योगो भवेत्कलशसंज्ञितः ॥ ९६ ॥
त्रयो ग्रहा भ्रातृसुतायसंस्थास्तथा शुभौ द्वौ रिपुसङ्गतौ च ।
कलत्रलग्नं च गतौ च शेषौ नृपस्य योगः खलु पूर्णकुम्भः॥९७॥
सुविस्तरं नीचकुलोद्भवा मया
विचित्ररूपाः कथिताः क्षितीश्वराः ।
अतःपरं पार्थिववंशजन्मनां
भवन्ति योगा मुनिभिः प्रकीर्तिताः ॥ ९८ ॥
सिंहोदये दिनकरो मृगलाञ्छनोजे[1]
कुम्भस्थितो रविसुतः स्वगृहे सुरेज्यः ।
स्वोच्चेऽपि भूमितनयः पृथिवीश्वरस्य
जन्मप्रदः सकललोकनमस्कृतस्य ॥ ९९ ॥
शुभे लग्नं याते बलवति तथा धर्मराशिक्रमेण
शुभैः शेषैर्लग्नं धनगृहमथ न्यायषट्कर्मगैश्च ।
महीपालः श्रीमान् भवति नियतं यस्य मातङ्गसङ्घाः
प्रयाणे मेघानां स्रुतमदजलैर्भ्रान्तिमुत्पादयन्ति ॥१००॥
[2]सुरपतिगुरुर्बन्धुस्थाने स्ववेश्मगतो यदा
तुहिनकिरणः सम्पूर्णाङ्गस्तपःसमवस्थितः ।
त्रितनुभवनप्राप्ताः शेषा ग्रहा यदि भूपतिः
भवति धृतिमान् स्फीतश्रीकस्तथा बहुवाहनः १०१
स्वोच्चोदये कृतपदः कुमुदस्य बन्धु-
र्जीवोऽर्थगो वणिजि दानवपूजितश्च ।
[3]कन्याजसिंहगृहगा बुधभौमसूर्याः
चन्द्रांशुनिर्मलयशा भवति क्षितीशः ॥ १०२ ॥

---

१ वा. २ दनुजपगुरु. ३ शेषाश्च मत्स्ययुगले यदि चेद्ग्रहेन्द्राः.

नक्षत्रनाथसहितः सविता नभस्थः
सौरिर्विलग्नभवने हिबुके सुरेज्यः ।
देवारिपूज्यबुधभूमिसुतैः सलाभैः
ख्यातो महीपतिरिहस्वगुणैर्नरः स्यात् ॥ १०३ ॥

मृगराशिं परित्यज्य स्थितो लग्ने बृहस्पतिः ।
करोत्यवश्यं नृपतिं मत्तेभपरिवारितम् ॥ १०४ ॥

लग्ने भौमो रविजसहितस्तीक्ष्णरश्मिः खमध्ये
वाचां स्वामी दशमगृहगो भार्गवः सप्तमस्थः ।
आये हेम्नः शिशिरकिरणो बन्धुराशिं प्रपन्नो
यद्येवं स्याद्विपुलयशसो जन्म भूपालकस्य ॥ १०५ ॥

न्यूनोऽपि कुमुदबन्धुः स्वोच्चस्थः पार्थिवं करोति नरम् ।
किं पुनरखण्डमण्डलकरनिकरप्रकटितदिगन्तः ॥ १०६ ॥

लग्नं विहाय केन्द्रे सकलकलापूरितो निशानाथः ।
विदधाति महीपालं विक्रमधनवाहनोपेतम् ॥ १०७ ॥

यदि पश्यति दानवार्चितं वचसामधिपस्तदा भवेत् ।
नृपतिर्बहुनागनायको भुजगेन्द्र इव प्रतापवान् ॥ १०८ ॥

दिवौकसां पतेर्मन्त्री कुर्यात्पश्यन्बुधं नरम् ।
शिरोभिः शासनं यस्य धारयन्ति नृपाः सदा ॥ १०९ ॥

लग्नाधिपतिः स्वोच्चे पश्यन्मृगलाञ्छनं नृपं कुरुते ।
बहुगजतुरगबलौघैः क्षपितविपक्षं महाविभवम् ॥ ११० ॥

इन्दुः स्वोच्चे पश्यन् करोति बुधभार्गवौ नरं नृपतिम् ।
प्रणतारिपक्षमुच्छ्रितयशसं सौभाग्यवन्तं च ॥ १११ ॥

अधिमित्रांशगश्चन्द्रो दृष्टो दानवमन्त्रिणा ।
अनिशं कुरुते लक्ष्मीस्वामिनं भूपतिं नरम् ॥ ११२ ॥

स्वांशेऽधिमित्रभावे वा गुरुणा यदि दृश्यते ।
शशी महीपतिं कुर्याद्दिवसे नात्र संशयः ॥ ११३ ॥

जन्माधिपतिः केन्द्रे बलपरिपूर्णः करोति परमर्धिम् ।
ब्राह्मणकुलेऽपि नृपतिं किं पुनरवनीशसंभूतम् ॥ ११४ ॥

---

१ विमल. २ क्षीणोऽपि. ३ स्वोच्चगतः. ४ वारणो. ५ यदा. ६ गुरुभार्गवौ.

रविरप्यधिमित्रस्थो यदि चन्द्रसमीक्षितः ।
अङ्गदेशाधिपं कुर्याद्धर्मार्थसहितं[1] नृपम् ॥ ११५ ॥
उच्चस्थः शशितनयः कुमुदाकरबन्धुना च समधिगतः[2] ।
जनयति मगधाधिपतिं गजमदगन्धेन वासितदिगन्तम् ॥११६॥
प्रधानबलसंयुक्तः सम्पूर्णः शशलाञ्छनः
एकोऽपि कुरुते जातं नराधिपमरिंदमम् ॥ ११७ ॥
केन्द्रे विलग्ननाथः श्रेष्ठबलो मानवाधिपं कुरुते ।
गोपालकुलेऽपि नरं किं पुनरवनीश्वराणां च ॥ ११८ ॥
कर्कटसंस्थः केन्द्रे वृहस्पतिर्दशमधामगः शशिनः ।
चतुरुदधिमेखलायाः स्वामी भूमेर्भवति जातः ॥ ११९ ॥
मेषे सहस्ररश्मिः सह शशिना संस्थितः करोतीशम् ।
केरलकर्णाटान्ध्रद्रविडानां चोलकस्यापि ॥ १२० ॥
उच्चस्थस्त्रिदशगुरुः कैरववनबन्धुसङ्गमं प्राप्तः ।
काश्मीरमण्डलभुवां करोति पुरुषाधिपमवश्यम् ॥ १२१ ॥
तुङ्गायस्वगृहोदयकण्टकनवमेषु यस्य शुक्रगुरू ।
सोवश्यं भवति नरो राजांशसमुद्भवो[3] नृपतिः ॥ १२२ ॥
दिक्स्थानकालादिबलैरुदाराः शुभाः पुनः केन्द्रमुपागताश्च ।
कुर्वन्ति पापैरविमिश्रचाराः पृथ्वीभुजं त्रिप्रभृतिग्रहेन्द्राः ॥ १२३॥
रवेर्द्वितीये बुधजीवभार्गवा नचाशुभैर्दृष्टयुता न वार्कगाः[4] ।
स्फुरत्करौघस्फुटपिञ्जरीकृता नरं प्रकुर्युस्त्रिसमुद्रपालकम् ॥ १२४ ॥
कुन्दाब्जकाशधवलः परिपूर्णमूर्त्तिः
जन्माधिपेन कविना[5] शुभदेन दृष्टः ।
श्रीमानभङ्गनिपुणं दयितं क्षपायाः
प्रख्यातकीर्तिसुनयं कुरुते नरेन्द्रम् ॥ १२५ ॥
देवमन्त्री कुटुम्बस्थो भार्गवेण समन्वितः ।
जनयेद्वसुधापालं निर्जितारातिमण्डलम् ॥ १२६ ॥
कारकयोगे जाता भवन्ति पृथ्वीभुजो नरास्तेषाम् ।

---

१ सहितः. २ मृगगतश्चसितः. ३ राजांग. ४ चार्क. ५ वलिना.

गजतुरगपत्तिविचलितरजोवितानं भवेद्गगनम् ॥ १२७ ॥
कुजे विलग्ने तरणेश्च नन्दने
रसातले शुक्रबृहस्पतीन्दुजाः।
मृगोदये मन्दनवांशकस्थिते
रसातलेशो भवतीह पार्थिवः ॥ १२८ ॥
स्वोच्चे गुरुस्तनुगतः स्वगृहे शशाङ्कः
शुक्रो झषे परममुच्चमितोऽसितश्च।
मेषे तथैव भगवान् सविता कुजः स्व-[2]
वर्गाधिपो यदि भवेन्नृपतिः प्रजातः ॥ १२९ ॥
शक्रेज्यः ससितः शुचिस्तिमियुगे स्वोच्चे च पूर्णः शशी
दृष्टस्तीव्रविलोचनेन[3] दिनकृन्मेषे यदासौ नृपः।
सेनायाश्चलनेन रेणुपटलैर्यस्य प्रनष्टे रवा-
वस्तभ्रान्तिसमाकुला कमलिनी सङ्कोचमागच्छति ॥ १३० ॥
क्रूरैर्नीचे रिपुभवनगैः षष्ठदुश्चिक्यगैर्वा
सौम्यैः स्वोच्चं परमुपगतैर्निर्मलैः केन्द्रगैश्च।
आज्ञां याते शिशिरकिरणे कर्कटस्थे निशाया-
मेकच्छत्रं त्रिभुवनमिदं यस्य स क्षत्रियेशः ॥ १३१ ॥
होरालेखामुपेतः स्फुटकरनिकरैः पूरिताङ्गः सुरेज्यः
चन्द्रः शुक्लार्धदेहो भवभवनगतः स्वेन पुत्रेण दृष्टः।
चन्द्राद्भानुर्द्वितीये[4] यदि भवति तदा नैव दृष्टः कुजेन
पाता जायेत भूमेर्बहुगजतुरगक्षुण्णभूपृष्ठपीठः ॥ १३२ ॥
रविशशिकुजैर्मेषे लग्ने सितार्किबुधैर्वृषे
धनुषि नवमे देवेज्ये च स्वभांशमुपागते।
रविरपि यदि स्वोच्चे वर्गे प्रधानबलोदयो
भवति नृपतिः सिद्धाज्ञातो[5] हतारिरणोद्भवः ॥ १३३ ॥
सितशशिसुतजीवैः पञ्चमस्थैर्नभोगै
रविरपि रिपुराशौ स्वोच्चगे भूमिपुत्रे।

---

१ पांसु. २ च स्वर्गाधिपो; च द्वीपाधिपो. ३ खगेन चैव. ४ भानुस्तृतीये. ५ विद्वान्जातो.

तपसि च रविपुत्रे जायते पार्थिवेन्द्रः
प्रथितविमलकीर्तिर्दानधर्मप्रतापैः ॥ १३४ ॥

त्रिदशगुरो रविर्हिमकरस्य भृगोस्तनयो
रवितनयः कुजस्य खलु दृष्टिपथं च गतः ।
भवति विलग्नगो यदि चरोदयराशिगतः
प्रथितयशा भवेत् क्षितिपतिः क्षपितारिगणः ॥ १३५ ॥

बुधः कन्यालग्ने सुरपतिगुरुश्चैव तिमिगः
स्थितः क्षोणीपुत्रः [1]प्रसवसमये वीर्यसहितः ।
शनिः शत्रुस्थाने त्रिदशरिपुपूज्यश्च हिबुके
यदैवं स्यात्सूतौ स्वभुजविजयी भूपतिरिह ॥१३६॥

यमे विलग्ने मकरप्रतिष्ठिते
दिवाकरे द्यूनगते सितेऽष्टमे ।
कुजेऽलिगे कर्कटगे निशाकरे
भवेत्प्रसिद्धो जगतीश्वरो नृपः ॥ १३७ ॥

मृगोदये भूमिसुते सुनिर्मले शनैश्चरे धर्मगृहे व्यवस्थिते ।
दिवाकरे सप्तमगे सहेन्दुना चलस्वभावो नृपतिः प्रजायते ॥१३८॥

शनैश्चरे लग्नगते सचन्द्रे बृहस्पतौ सप्तमराशिगे च ।
शुक्रेण दृष्टे शशिजे स्वतुङ्गे जायेत पृथ्वीपतिरप्रधृष्यः ॥१३९॥

[2]चापे भवेत्सुरगुरुर्हृतदृष्टिशुद्धो
लग्ने सुरारिदयितः शशिनि स्वराशौ ।
वापीतडागसुरवेश्मकरो नरोऽत्र
जायेत मानवपतिर्द्विजदेवभक्तः ॥ १४० ॥

एकः स्वोच्चे शुभगगनगः संस्थितो निर्मलांशुः
केन्द्रे भानुः प्रकटितकरः केवलः पूर्णवीर्यः ।
दृष्टः कुर्यादमरगुरुणा पञ्चमस्थेन जातं
भूमेर्नाथं बहुगजपतिं सर्ववन्द्यं कृतार्थम् ॥ १४१ ॥

षष्ठे कुजार्किरवयः सहजेऽथवाऽपि
सिंहे सुरारिसचिवोऽथ भवर्क्षसंस्थः ।

---

१ प्रथमभवेन. २ पापाभवे सुरपुरोहितदृष्टिशुद्धा.

दृष्टः शुभैर्दिनकरेन्दुविहीनदृष्टिः
कुर्यान्नृपं स्वभुजनिर्जितशत्रुपक्षम् ॥ १४२ ॥
वहति मृदुसमीरो निर्मलव्योममध्ये
विमलनिरुपसर्गाः खेचरा वृत्तवैराः ।
उदयति सुरवन्द्ये मण्डले मातृकाणां
यदि वृषभगृहस्थो भार्गवः स्यात् क्षितीशः ॥१४३॥
शशिबुधरुधिराख्यैः स्वांशकस्थैर्न नीचैः
व्ययगृहसहजस्थैर्नापि सूर्यप्रविष्टैः ।
तनयभवनसंस्थे वाक्पतौ चन्द्रयुक्ते
भवति मनुजनाथः कीर्तिशुक्लीकृताशः ॥ १४४ ॥
अधिमित्रगते केन्द्रे जन्माधिपतिर्विलग्नपतियुक्तः ।
पश्यति बलपरिपूर्णो लग्नं स्यात्पुष्कलो योगः ॥ १४५ ॥
पुष्कलयोगे पुरुषा जायन्ते भूमिपालका नित्यम् ।
सुचिरं भ्रमन्ति हतरिपुगजमदगन्धेन वासितदिगन्ताः ॥१४६॥
राश्यादौ लग्नपतिः करोति जातं नरेन्द्रदण्डपतिम् ।
मध्ये मण्डलनाथं ग्रामपतिं चैव भवनान्ते ॥ १४७ ॥
पौष्णे फाल्गुन्यां वा मूले पुष्ये च भास्करः कुरुते ।
लग्नगतो नरनाथं योजनशतमात्रके देशे ॥ १४८ ॥
कृत्तिकारेवतीस्वातीपुष्यस्थायी भृगोः सुतः ।
करोति भूभुजां नाथमश्विन्यामपि संस्थितः ॥ १४९ ॥
विदधाति सार्वभौमं लग्नांशपतिः स्वतुङ्गगः केन्द्रे ।
नृपतिं लग्नाधिपतिर्जन्माधिपतिर्धनसमृद्धम् ॥ १५० ॥
मीने निशाकरः पूर्णः सुहृद्ग्रहनिरीक्षितः ।
सार्वभौमं नरं कुर्यात्सिद्धाज्ञानान्न संशयः ॥ १५१ ॥
याते भौमे कर्मस्थानं
शिशिरकरभृगुसुतैस्तपः समवस्थितैः ।
आये स्वोच्चे प्राप्तो भानु-
स्त्रिदशपतिसचिवसहितो यदि प्रसवे भवेत् ॥ १५२ ॥

---

१ शरीरे. २ गृहे. ३ लग्ने. ४ सिद्धाज्ञाकन्न. ५ प्रभवे.

क्षोणीभर्त्ता याने यस्य

अविचलिततुरगरजसा दिशः परितो गतः ।

एवं कर्तुंभूयो भूयो

धरणितलपरिमलसुखं प्रयान्ति रवेर्हयाः ॥ १५३ ॥

शशिसहिते केन्द्रस्थे शनैश्चरे भवति जारजातस्तु ।

राजा भुवि गजतुरगग्रामधनैर्वर्द्धितश्रीकः ॥ १५४ ॥

शुक्रवाक्पतिबुधैर्धनसंस्थैर्द्यूनगैः शशिरविक्षितिपुत्रैः ।

जायते क्षितिपतिः पृथुवक्षाः सर्वतः क्षपितशत्रुसमूहः ॥ १५५ ॥

भानुः प्राणी शशिगृहयुतः शीतरश्मिश्च तस्मिन्

एकः स्वोच्चे यदि गगनगो निर्मलः पूर्णरश्मिः ।

लग्नं प्राप्तः सुरपतिगुरुः षष्ठगः स्यात्क्षितीशः

छन्नो यस्य प्रचलितचमू रेणुभिर्व्योममार्गः ॥ १५६ ॥

कुम्भस्याष्टमभागे त्रिकोणसंस्थे ( पिच ) निशानाथे ।

जातो भवत्यवश्यं राजा शुभदः समस्तलोकस्य ॥ १५७ ॥

मेषस्य सप्तमांशे करोति पृथ्वीसुतः स्थितो नृपतिम् ।

सिंहस्य पञ्चमांशे नरमिथुनांशे भवेद्भूपः ॥ १५८ ॥

कुम्भस्य पञ्चदशके भागे चन्द्रस्थितो महीपालम् ।

कर्कटकस्य च दशमे करोति पुरुषं सदा प्रभवे ॥ १५९ ॥

धनुषि च विंशे जीवः करोति नृपतिं स्थितो जनख्यातम् ।

सिंहस्य पञ्चमांशे तथा च हेलिर्बुधो ज्ञेयः ॥ १६० ॥

एकस्मिन् पञ्चकृतौ पञ्चदशस्वास्थितश्चन्द्रः ।

भागेषु वीरनृपतिं करोति भुजलब्धपृथ्वीकम् ॥ १६१ ॥

मकरस्य पञ्चमांशे करोति पुरुषं नरेश्वरं सुनयम् ।

योगे भूतलतिलकं धर्मज्ञं शास्त्रनिरतं च ॥ १६२ ॥

कर्कटके शशिजीवौ पञ्चसु भागेषु संस्थितौ कुरुतः ।

भूमिपतिमप्रधृष्यं रविरिव सर्वग्रहगणस्य ॥ १६३ ॥

चन्द्रः पुष्ये नृपतिं वर्गोत्तमकृत्तिकाश्विनीसंस्थः ।

---

१ गतैः. २ परिभ्रम. ३ जातोत्र. ४ एकाधिकविंशांशे. ५ त्रिंशे. ६ रविजो.
७ सुभगम्.

विदधाति सार्वभौमं त्रिपुष्करे वाऽपि परिपूर्णः ॥ १६४ ॥
अश्विन्यनुराधास्थः स्थितः श्रविष्ठासु पार्थिवं भौमः ।
कुरुते स्वोच्चमुपगतो वर्गोत्तमगश्च नान्यत्र ॥ १६५ ॥
व्योम्नि शंखधवलो निशाकरो भार्गवस्तपसि संस्थितः शुचिः ।
आयगाश्च यदि सर्व एव ते स्यान्महीपतिरतुल्यपौरुषः॥१६६॥
चन्द्रादुपचयसंस्था गगनसदः सर्व एव यदि सूतौ ।
जायेत माननिलयः समस्तपृथ्वीपतिः पुरुषः ॥ १६७ ॥
जीवनिशाकरसूर्याः पञ्चमनवमतृतीयगा वक्रात् ।
यदि भवति तदा राजा कुबेरतुल्यो धनैर्वासौ ॥ १६८ ॥
रविस्तृतीये भृगुनन्दनः सुखे बुधस्य चान्ये यदि पञ्चमे स्थिताः ।
न नीचराशौ न च शत्रुवेश्मगा भवेन्नरेन्द्रस्त्रिसमुद्रपारगः॥१६९॥
वृहस्पतेर्भौमदिवाकरेन्दवो गता द्वितीयाम्बुनभःस्थलं क्रमात् ।
विपक्षराशौ परिशेषखेचरा यदा तदा भूमिपतिर्नृपात्मजः ॥१७०॥
भृगोरपत्याद्बुधभास्करात्मजौ चतुष्टयस्थौ परिशेषखेचराः ।
तृतीयलाभर्क्षगतास्तु ते यदा महीपतिं कुर्युरसंशयं तदा ॥१७१॥
शुक्रबुधौ रवितनयात्केन्द्रे वाचस्पतिर्भवेदुच्चे ।
सिंहासनाधिशायी यदि राजा स्वोच्चगाश्च परिशेषाः॥१७२॥
सवितुस्तृतीयपञ्चमलाभर्क्षसमाश्रिताः सदा यस्य ।
सर्वे ग्रहाः स नृपतिर्मन्त्री सेनापतिर्वाऽपि ॥ १७३ ॥
लग्नपतेः स्फुटरश्मेः पापा लाभे शुभाश्च केन्द्रस्थाः ।
यदि भवति तदा नृपतिः स्वभुजार्जितसर्वभूमितलः ॥१७४॥
लाभे तृतीयषष्ठे यदि पापा जन्मपस्य शुभदृष्टाः ।
भवति तदा धरणीशः समस्तनृपवन्दितः साधुः ॥ १७५ ॥
विचरति सुरपूज्यो मेषभेऽथापि सिंहे
दहनकिरणदृष्टे भूमिपुत्रे स्वराशौ ।
न च गगनविचारी कश्चिदेकोऽपि नीचे
यदि नृपतिसमुत्थो जायते पार्थिवेन्द्रः ॥ १७६ ॥

१ सूर्य. २ पालकः. ३

चन्द्राद्ग्रहैर्निगदिताः सुनफादयश्च
केन्द्रस्थितैर्यदि भवन्ति च तेऽत्र योगाः ।
विश्वम्भराधिपकुलेषु महत्सु जाता
योगेषु तेषु मनुजेश्वरतां लभन्ते ॥ १७७ ॥
केन्द्रगौ यदि तु जीवशशाङ्कौ यस्य जन्मनि च भार्गवदृष्टौ ।
भूपतिर्भवति सोऽतुलकिर्तिर्नीचगो यदि न कश्चिदिह स्यात् १७८
उदयशिखरिसंस्थो भार्गवो यत्र तत्र
बुधरविसुतदृष्टः स्वांशकस्थोऽतिवीर्यः ।
जनयति नरनाथं वाक्पतौ पञ्चमस्थे
भुजबलहतशत्रुं सार्वभौमं गजाढ्यम् ॥ १७९ ॥
सिंहे कमलिनीनाथः कुलीरस्थो निशाकरः ।
दृष्टौ द्वावपि जीवेन पार्थिवं कुरुतस्तदा ॥ १८० ॥
बुधः कर्कटमारूढो वाक्पतिश्च धनुर्धरम् ।
सूर्यभूसुतदृष्टौ च यदि स्फीतो महीपतिः ॥ १८१ ॥
शफरीयुगले चन्द्रः कर्कटे च बृहस्पतिः ।
शुक्रः कुम्भे यदा शक्तस्तदा राजा भवेदिह ॥ १८२ ॥
सितदृष्टः शनिः कुम्भे पद्मिनीदयितो भवे[1] ।
चन्द्रे जलचरे राशौ यदि जातो नृपो भवेत् ॥ १८३ ॥
कुजोऽलिगोऽथ मेषे वा रविजीवनिरीक्षितः ।
वृषे ज्ञः जीव[2]संदृष्टस्तदाऽपि पृथिवीपतिः ॥ १८४ ॥
अमलवपुरवक्रः कैरवाणां विकासी
स्वगृहमथनवांशं स्वोच्चभांशं गतो वा ।
हितगगननिवासैः पञ्चभिर्दृश्यमानो
जनयति जगतीशं नीचभे नो यदि स्यात् ॥ १८५ ॥
लाभे मन्दो गुरुभृगुसुतावुद्गमे खे शशाङ्को
बन्धावर्कौ बुधकुतनयौ[3] वक्रगौ चेत्स भूपः ।

---

१ दये. २ शुक्र. ३ तन–यावर्थगौ

यत्सेनायास्ततमदजलक्षोभतो वारणेन्द्रैः
भूयः सेतोः स्मरति सहसा क्षोभितान्तोऽम्बुराशिः १८६

इति कल्याणवर्मविरचितायां सारावल्यां राजयोगाध्यायो नाम पञ्चत्रिंशः ॥

## षट्त्रिंशोऽध्यायः ।

रश्मिप्रधानमेतद्यस्माच्छास्त्रं वदन्ति माणिन्धाः ।
तस्मात्प्रयत्नतोऽहं कथयामि यथामतं तेषाम् ॥ १ ॥
स्वोच्चस्थे दश सूर्ये नव चन्द्रे पञ्च भूमितनये च ।
पञ्चेन्दुजे सुरेड्ये सप्ताष्टौ भार्गवे शनौ पञ्च ॥ २ ॥
एवं महेन्द्रशास्त्रे मणिन्धमयबादरायणप्रोक्ते ।
सप्त प्रत्येकस्था निर्दिष्टा रश्मयो ग्रहेन्द्राणाम् ॥ ३ ॥
सर्वे प्रमाणमेते मुनिवचनात् किन्तु सप्तसंख्यैव ।
बहुवाक्यादस्माकं नीचगतः स्याद्विगतरश्मिः ॥ ४ ॥
अभिमुखरश्मिर्नीचाद्भ्रष्टः स्वोच्चात्पराङ्मुखो ज्ञेयः ।
अन्तरगतेऽनुपातो यथा तथा संप्रवक्ष्यामि ॥ ५ ॥
[1]न्यूने मण्डलशोध्यश्चक्रात् षड्भवनतो यदाभ्यधिकः ।
आत्मीयरश्मिगुणितात्षड्भक्ताद्रश्मयस्तस्मात् ॥ ६ ॥
मित्रद्वादशभागे द्विगुणास्त्रिगुणाः स्वके च दीधितयः ।
वक्रे पुनस्तथोच्चे स्वराशिगे तद्भवत्येव ॥ ७ ॥
द्विगुणाः स्युर्दीधितयो वक्रस्थेऽप्येवमेव स्युः ।
वैरिद्वादशभागे नीचे च भवन्ति षोडशांशोनाः ॥ ८ ॥
अस्तं गतो विरश्मिः शनिसितवर्जं ग्रहो ज्ञेयः ।
वक्रान्तस्थे द्विगुणा वक्रत्यागेऽष्टभागहीनाश्च ।
एवं रश्मिविधानं पूर्वाचार्यैः समुद्दिष्टम् ॥ ९ ॥
एकादि पञ्च यावद्रश्मिभिरतिदुःखिताः कुलविहीनाः ।
परतन्त्रका दरिद्रा नीचरताः संभवन्ति नराः ॥ १० ॥
परतो दशकं यावत् भृतकादीनां विदेशगमनरताः ।

---

१ नीचविहीनः. २ ताप्त. ३ र.

जायन्तेऽत्र मनुष्याः सौभाग्यपरिच्युता मलिनाः ॥ ११ ॥
ऊर्ध्वं पञ्चदशास्तिर्यावत्तावद्बहुश्रुताः सुजनाः ।
धर्माभिरताः सुसुखाः कुलस्य तुल्याः प्रजायन्ते ॥ १२ ॥
आविंशतेर्भवेयुः कुलाधिका धनयुता[1] जनख्याताः[2] ।
कीर्तिकराश्च मनुष्या यथाक्रमं स्वजनसम्पूज्याः ॥ १३ ॥
पूज्याः सुभगा धीराः कृतिनो भूपास्तु शरकृतिर्यावत् ।
परतो भवन्ति मनुजाः संसाधितसकलकरणीयाः[3] ॥ १४ ॥
अत उत्तरेण चण्डा नृपाश्रिता नृपतिलब्धधनसौख्याः ।
त्रिंशद्यावत्सचिवाः पूज्याश्च भवन्ति भूपानाम् ॥ १५ ॥
एकत्रिंशद्भिस्तु प्रवराः ख्याता महीभुजामिष्टाः ।
द्वात्रिंशद्भिः पुरुषाः पञ्चाशद्ग्रामपतयः[4] स्युः ॥ १६ ॥
ग्रामसहस्राधिपतिं त्रिंशत् त्र्यधिका करोति रश्मीनाम् ।
त्रिसहस्रग्रामाणां पुरुषं सूतौ चतुस्त्रिंशत् ॥ १७ ॥
परतो मण्डलभाजो बहुकोशपरिग्रहा महासत्वाः ।
प्रख्यातकान्तियशसो भवन्ति सुभगाश्च लोकानाम् ॥१८॥
त्रिंशत् षड्भिः सहिता रश्मीनां यस्य जन्मसमये स्यात् ।
सार्धं भुनक्ति लक्षं स ग्रामाणां पुमान्नियतम् ॥ १९ ॥
त्रिंशन्मण्डलसहिता रश्मीनां सम्भवे भवेद्येषाम् ।
लक्षत्रितयपतित्वं ग्रामाणां जायते तेषाम् ॥ २० ॥
त्रिंशत्सनवा गावो जन्मनि येषां ग्रहोत्थिताः सन्ति ।
ते तोषितसकलजना भवन्ति पृथ्वीश्वराः पुरुषाः ॥ २१ ॥

दशजलधिगुणाया रश्मिसंख्या नराणां
दिशति पृथुलभूमेः पालकत्वं च तेषाम् ।
हतरिपुवनिताभिर्गीयतेऽतीव कीर्त्तिः
करुणरुदितगर्भैरुद्यदाक्रोशशब्दैः ॥ २२ ॥
शशिजलनिधिसंख्यै रश्मिभिः श्रूयते यो
जलनिधिरशनायाः पार्थिवः स्यात्स भूमेः ।

१ जन. २ धन. ३ सत्साधित. ४ पञ्च

द्विजलधिरशनायाः पक्षवेदाख्यसंख्यैः
त्रिजलधिरशनाया वह्निवेदैस्तथैव ॥ २३ ॥
वेदाब्धिसंख्यैश्च मयूखजालैर्जाता नरेन्द्राः खलु सार्वभौमाः ।
सौम्याः सुरब्राह्मणभक्तिशीला दीर्घायुषः सत्वयुता भवन्ति ॥२४॥
परतः परतः किरणैर्द्वीपान्तरपालका निरुपसर्गाः ।
सर्वनमस्याः सुभगा महेन्द्रतुल्यप्रतापाश्च ॥ २५ ॥
चत्वारिंशद्युक्ता[1] पञ्चादिभिरत्र यस्य सूतौ स्यात् ।
ज्ञेयं तस्यारिष्टं सर्वक्षितिपालकं[2] मुक्त्वा ॥ २६ ॥
भुवनभरसहिष्णोः सर्वतः क्षीणशत्रोः
त्रिदशपतिमहिम्नः सर्वलोकस्तुतस्य ।
विदधति विहगानां रश्मयोऽतीव दीप्ता-
स्तुरगकृतिसमानाश्चक्रवर्तित्वमेव ॥ २७ ॥
अभिमुखकरप्रवाहाः फलं प्रयच्छन्ति पुष्टतरमाशु ।
तद्विपरीतं पुंसां पराङ्मुखास्तु ग्रहेन्द्राणाम् ॥ २८ ॥
जन्मसमये ग्रहाणां रश्मीनां संक्षये क्षयो भवति ।
वृद्धेर्वर्धिष्णूनामधमोत्तमता क्रमेणैव ॥ २९ ॥

इति कल्याणवर्मविरचितायां सारावल्यां रश्मिचिन्ता नाम षट्त्रिंशोऽध्यायः ॥

---

## सप्तत्रिंशोऽध्यायः ।

श्रीदेवकीर्तिराजा पञ्चमहापुरुषलक्षणान्नृपतीन् ।
कथयति यांस्तानहमपि कथयामि निराकुलीकृत्य ॥ १ ॥
स्वक्षेत्रे च चतुष्टये च बलिभिः स्वोच्चस्थितैर्वा ग्रहैः
शुक्राङ्गारकमन्दजीवशशिजैरेतैर्यथानुक्रमम् ।
मालव्यो रुचकः शशोऽथ कथितो हंसश्च भद्रस्तथा
सर्वेषामपि[3] विस्तरं[4] मतिमतां संक्षिप्यते लक्षणम् ॥ २ ॥
महीसुतात्सत्वमुदाहरन्ति गुरुत्वमिन्दोस्तनयाद्गुरोश्च ।
स्वरं सितात्स्नेहमिनेश्च वर्णं बलाबलं[5] पूर्णलघूनि चैषाम् ॥३॥

---

१ चत्वारिंशद्विप्ता. २ सर्वक्षितिपालकानुक्ताः (?) ३ मति. ४ विस्तरान्मुनिमतात्संकल्प्य ते. ५ बलैः.

मृदुर्दयालुर्बहुदा[1]रभृत्यः स्थिरस्वभावः प्रियसत्यवादी।
सुरद्विजोपास्तिकरः सहिष्णुर्भवे[2]न्नरः सत्वगुणप्रधानः॥ ४॥
शूरः कलाकाव्यनिधिः सुबुद्धिः स्त्रीभोग[3]संसक्तमनाः प्रवीणः।
आडम्बरी हास्यर[4]तिः प्रगल्भो गेया[5]क्षविद्राजसिकः [6]प्रदिष्टः॥ ५॥
मूर्खोऽलसो वञ्चयिता परेषां क्रोधी विषण्णः पिशुनः क्षुधार्तः।
आचारहीनो न शुचिर्म[7]दान्धो लुब्धः प्रमादी तमसाभिभूतः॥ ६॥
भारो भवति नृपाणां [8]भूम्यर्थं भुञ्जतां मनुष्याणाम्।
येषां भा[9]गे त्वर्धं सकलमहीपालकास्ते स्युः॥ ७॥
समाः स्वरैः सिंहमृदङ्गदन्तिनां रथौघभेरीवृषतोयदायिनाम्।
समस्तभूमण्डलरक्षणक्षमा भवन्ति भूपा जितशत्रवो नराः॥ ८॥
स्निग्धैर्भवन्ति भूपा जिह्वात्वग्दन्तनेत्रनखकेशैः।
रूक्षैरेभिर्निःस्वाः स्वरैश्च ते जातके कथिताः॥ ९॥
स्निग्धस्तेजोयुक्तः शुद्धो वर्णः प्रकीर्तितो नृपतेः।
विपरीतः क्लेशभुजां सुखार्थसुखभागिनां मध्यः॥ १०॥
व्योमाम्बुवाताग्निमहीस्वभावा जीवासुरेड्यार्किमहीजसौम्यैः।
छायामरुत्पित्तक[10]फस्वरूपा मिश्रैस्तु मिश्रा बलिभिर्नरस्य॥ ११॥
शब्दार्थविन्न्यायपटुः प्रगल्भो विज्ञानयुक्तो विवृतास्यभागः।
चित्राङ्गसन्धिः कृशपाणिपादो व्योमप्रकृत्या पुरुषोऽतिदीर्घः॥ १२॥
लावण्यवाही बहुभारवाही प्रियादिभाषी [11]द्रवभोजनश्च।
चलस्वरूपो बहुमित्रपक्षः क्षोणीपतिर्नातिचिरप्रगल्भः॥ १३॥
सत्वेन वायोः पुरुषः कृशाङ्गः क्षिप्रं च कोपस्य वशं प्रयाति।
कृत्यैकबुद्धिर्भ्रमणे रतश्च दाता सितो भूपतिरप्रधृष्यः॥ १४॥
शूरः क्षुधार्त्तश्चपलोऽतितीक्ष्ण[12]ः प्राज्ञः कृशो गौरतनुर्विरोधी।
विद्वान् [13]सुपाणिर्बहुभक्षणश्च वह्निस्वभावः पुरुषोऽतिकायः॥ १५॥
कर्पूरजात्युत्पलपुष्पगन्धो भुनक्ति भोगान् स्थिरलब्धसौख्यः।
सिंहाभ्रघोषः स्थिरचित्तवृत्तिर्महीस्वभावः पुरुषः [14]ससत्वः॥ १६॥

---

१ दास. २ निविष्टबुद्धिः. ३ सक्तचित्तः क्रतुषु. ४ रतः. ५ गोपोक्षविद्रा, वेदार्थविद्रा. ६ प्रसिद्धः. ७ गंदार्त्तो. ८ भूराश्यर्थं, भूत्यर्थं. ९ भाराघ्यर्थं. १० कफानु. ११ ध्रुव. १२ तृष्णः. १३ सुमानी. १४ सुसत्वः.

स्फटिकोपलसङ्काशा स्वच्छा गगनोत्थिता भवेच्छाया ।
निधिरिव पुंसां धन्या त्रिवर्गफलसाधनी सौम्या ॥ १७ ॥
स्निग्धा सिता च हरिता कान्ता मातेव सर्वसुखजननी ।
सौभाग्याभ्युदयशुभान् करोति जलसम्भवा च्छाया ॥ १८ ॥

असितजलदकान्तिः पापगन्धोऽतिमूढो
मलिनपरुषकायः शोकसन्तापतप्तः ।
स वहति[1] वधदैन्यव्याध्यनर्थार्थनाशान्
विचरति पवनोत्था यस्य कान्तिः शरीरे ॥ १९ ॥

कमनदहनदीप्तिश्चण्डदण्डोऽतिहृष्टः
प्रणतसकलशत्रुर्विक्रमाक्रान्तभूमिः ।
भजति मणिसुवर्णं सर्वकार्यार्थसिद्धिं
प्रशमितगतशोको[2] वह्निजायां प्रभायाम् ॥ २० ॥

आघ्राम्बुसिक्तवसुधागरुतुल्यगन्धः
सुस्निग्धदन्तनखरोमशरीरकेशः ।
धर्मार्थतुष्टिसुखभाक् जनसम्प्रियश्च
च्छाया यदा भवति भूमिकृता मनुष्ये ॥ २१ ॥

शीतार्त्तो बहुभाषको द्रुतगतिर्नावस्थितः कुत्रचित्
शूरो मत्सरवान् रुजाकररुचिर्दौर्भाग्ययुक्तोऽनयः ।
दन्तान्[3]खादति नातिसौहृदमतिर्गान्धर्ववेत्ता कृशो
मित्राणां समुपार्जनेऽतिनिपुणः स्वप्ने च खे गच्छति॥ २२॥

अपगतधृतिरूक्षश्मश्रुकेशः कृतघ्नः
स्फुटित[4]चरणहस्तः क्रोधनो नष्टकान्तिः ।
विलपति च[5] निबन्धी वित्त[6]संक्षारकारी
भवति पुरुष एवं मारुतैकप्रधानः ॥ २३ ॥

दुर्गन्धी लघुतापनो विपुलधीः क्षिप्रप्रसादः पुनः
पीनो रक्तनखाक्षिपाणिचरणो वृद्धाकृतिर्दाहवान् ।

---

१ भवति. २ गदकोपो. ३ दन्तात्खादति. ४ घटित. ५ न निबन्धं. ६ चित्तसंहारकारी.

मेधावी युधि निर्भयो हिमरुचिर्ब्रूते निगृह्यापरान्
नो भीतः प्रणयं प्रयाति बहुभिः कुर्यान्नतानां प्रियम्॥२४॥
स्वप्नेऽभिपश्यति सुवर्णदिनेशदीपान्
दावाग्निकिंशुकजपामणिकर्णिकारान् ।
रक्ताब्जषण्डरुधिरौघतटित्समूहान्
पित्ताधिको निगदितः खलु लक्षणज्ञैः ॥ २५ ॥
श्रीमान् श्लिष्टाङ्गसन्धिर्धृतिबलसहितः स्निग्धकान्तिः सुदेहो
ग्राही सत्वोपपन्नो हतमुरजघनध्वानघोषः सहिष्णुः ।
गौरो रक्तान्तनेत्रो मधुररसरुचिर्वद्धवैरः कृतज्ञः
क्लेशे च स्यादखिन्नः सकलजनसुहृत्पूजको वा[1] गुरूणाम्॥२६॥
सुप्तस्तु पश्यति समुद्रनदीसरांसि
मुक्ताफलप्रकरहंससिताब्जशङ्खान् ।
नक्षत्रकुन्दकुमुदेन्दुतुषारपातान्
श्लेष्माधिको मुनिवरैः कथितः क्रमेण ॥ २७ ॥
बलरहितेन्दुरविभ्यां युक्तैर्भौमादिभिर्ग्रहैर्मिश्राः ।
न भवन्ति महीपाला दशासु तेषां सुतार्थयुताः ॥ २८ ॥
न स्थूलोष्ठो न विषमवपुर्नातिरक्ताङ्गसन्धि-
र्मध्ये क्षामः शशधररुचिर्हस्तिनादः[2] सुगन्धः ।
सन्दीप्ताक्षः समसितरदो जानुदेशाप्तपाणि-
र्मालव्योऽयं विलसति नृपः[3] सप्ततिर्वत्सराणाम्[4] ॥ २९ ॥
वक्त्रं त्रयोदशमितानि दशाङ्गुलानि
दैर्घ्येण कर्णविवरं दशविस्तरेण ।
मालव्यसंज्ञमनुजः स भुनक्ति नूनं
लाटान् समालवसिन्धुसपारियात्रान् ॥ ३० ॥

॥ इति मालव्ययोगफलम् ॥

दीर्घास्यः स्वच्छकान्तिर्बहुरुचिरबलः साहसावाप्तकार्य[5]-
श्चारुभ्रूर्नीलकेशश्चरणरणरतो मन्त्रविच्चोरनाथः ।

---

१ नो. २ हस्तिसार. ३ वयः. ४ सप्ततिं वत्सराणाम्. ५ दास.

रक्तश्यामोऽतिशूरो[1] रिपुबलमथनः कम्बुकण्ठः प्रधानः
क्रूरो भर्त्ता नराणां द्विजगुरुविनतः क्षामसज्ञानुजङ्घः ॥३१॥
खट्वाङ्गपाशवृषकार्मुकवज्रवीणा
रेखाङ्कहस्तचरणश्च[2] शताङ्गुलश्च ।
मन्त्राभिचारकुशलस्तुलया सहस्रं
मध्ये च तस्य कथितं मुखदैर्घ्यतुल्यम् ॥ ३२ ॥
विन्ध्याचलसह्यगिरीन् भुनक्ति सप्ततिसमा नगरदेशान् ।
शस्त्रानलकृतमृत्युः प्रयाति देवालयं रुचकः ॥ ३३ ॥

॥ इति रुचकः ॥

तनुद्विजास्यो द्रुतगः शशोऽयं शठोऽतिशूरो निभृतप्रतापः ।
वनाद्रिदुर्गेषु नदीषु सक्तः कृशोदयी नातिलघुः प्रसिद्धः ॥३४॥
सेनानाथो निखिलनिरतो दन्तुरश्चापि किञ्चित्
धातोर्वादे भवति निरतश्चञ्चलः कोशनेत्रः ।
स्त्रीसंसक्तः परधनगृहो मातृभक्तः सुजङ्घो
मध्ये क्षामो बहुविधमती रन्ध्रवेदी परेषाम् ॥३५॥
पर्यङ्कशङ्खहरिशस्त्रमृदङ्गमाला
वीणोपमा यदि करे चरणे च रेखाः ।
वर्षाणि सप्ततिमितानि करोति राज्यं
प्रत्यन्तिकः क्षितिपतिः कथितो मुनीन्द्रैः ॥ ३६ ॥

॥ इति शशः ॥

रक्तास्योन्नतनासिकः सुचरणो हंसः प्रसन्नेन्द्रियो
गौरः [3]पीनकपोलरक्तकरजो हंसस्वरः श्लेष्मलः[4] ।
शङ्खाब्जाङ्कुशदाममत्स्ययुगलः [5]खट्वाङ्गचापाङ्गदः
चिह्नैः पादकराङ्कितो मधुनिभे नेत्रे च वृत्तं शिरः ॥ ३७ ॥
सलिलाशयेषु रमते स्त्रीषु न तृप्तिं प्रयाति कामार्तः ।
षोडशशतानि तुलितोऽङ्गुलानि दैर्घ्येण षण्णवतिः ॥ ३८ ॥

---

१ श्लक्ष्णः श्यामो. २ चक्रासि. ३ पीत. ४ मणः. ५ कत्वङ्गमालाघटैः.

पातीह देशान् खलु शूरसेनान् गान्धारगङ्गायमुनान्तरालान् ।
जीवेदनूनां शतवर्षसंख्यां पश्चाद्वनान्ते समुपैति नाशम् ॥ ३९ ॥

॥ इति हंसः ॥

शार्दूलप्रतिमाननो द्विपगतिः पीनोरुवक्षःस्थलो
लम्बापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः ।
कामी कोमलसूक्ष्मरोमनिकरैः संरुद्धगण्डस्थलः
प्राज्ञः पङ्कजगर्भपाणिचरणः सत्वाधिको योगवित् ॥ ४० ॥

शङ्खासिकुञ्जरगदाकुसुमेषुकेतुचक्राब्जलाङ्गलविचिह्नितपाणिपादः ।
यात्रागुरुद्विपमदप्रथमाम्बुसिक्तभूकुङ्कुमप्रतिमगन्धतनुः सुघोणः ४१

शास्त्रार्थविद्धृतियुतः समसंगतभ्रूर्नागोपमो भवति चाथ निगूढगुह्यः ।
सत्कुक्षिधर्मनिरतः सुललाटशङ्खो धीरः स्थिरस्त्वसितकुञ्चितकेशभारः।

स्वतन्त्रः सर्वकार्येषु स्वजनप्रीणनक्षमी ।
भुज्यते विभवश्चास्य नित्यं मित्रिजनैः परैः ॥ ४३ ॥

भारस्तुलायां तुलितो यदि स्यात् श्रीमध्यदेशेष्वधिपस्तदासौ ।
यस्त्यादिपुष्टैः सहितः सभद्रः सर्वत्र राजा शरदामशीतिः ॥ ४४ ॥

॥ इति भद्रः ॥

इति कल्याणवर्मविरचितायां सारावल्यां पञ्चमहापुरुषलक्षणं नाम सप्तत्रिंशोऽध्यायः ॥

---

## अष्टात्रिंशोऽध्यायः ।

विस्तरतो निर्दिष्टाः क्षितिपतियोगा विचित्रसंस्थानाः ।
भङ्गश्च भवति तेषां यथा तथा सम्प्रवक्ष्यामि ॥ १ ॥

कुजार्कजीवार्किभिरत्र नीचैर्द्वाभ्यां त्रिभिर्वैकतमे विलग्ने ।
निशाकरे वृश्चिकराशिसंस्थे विशीर्यते राजकरो हि योगः ॥ २ ॥

अन्त्याष्टमादिभागे चरराश्यादिषु शशी यदा क्षीणः ।
एकेनापि न दृष्टो ग्रहेण भङ्गस्तदा नृपतेः ॥ ३ ॥

---

१ जीवेन्नवत्यंदश. २ तोरण. ३ चाति, चापि. ४ स्वजनं प्रति. ५ क्षमः. ६ अर्थि, मित्र. ७ कान्यकुब्जाधिपति. ८ हस्त्यादिसुख्यैः.

सर्वे क्रूराः केन्द्रे नीचारिगता न सौम्ययुतदृष्टाः ।
शुभदा व्ययरिपुरन्ध्रे तदाऽपि भङ्गो भवेन्नृपतेः ॥ ४ ॥
लग्नं गणोत्तमोनं न खेचरैर्दृश्यते तदा भङ्गः ।
भवति हि नृपयोगानां दारिद्र्याय प्रजातस्य ॥ ५ ॥
घटोदये नीचगतैस्त्रिभिर्ग्रहैर्बृहस्पतौ सूर्ययुते च नीचगे ।
एकोऽपि नोचे तु[1] शुभेन सङ्गताः प्रयान्ति नाशं शतशो नृपोद्भवाः॥६॥
शून्येषु केन्द्रेषु शुभैर्नवेन्दावस्तं गतैर्नीचमथ प्रयातैः ।
चतुर्ग्रहैर्वाऽपि गृहे रिपूणां प्रणश्यति क्ष्माधिपतेस्तु योगः ॥ ७ ॥
स्वांशे रवौ शीतकरे विनष्टे पापैश्च दृष्टे शुभदृष्टिहीने ।
कृत्वाऽपि राज्यं च वने मनुष्यः पश्चात्सुदुःखं लभते गताशः ॥८॥
शिशिरकिरणशत्रुर्लग्नपश्चन्द्रदृष्टः[2]
सहजरिपुमदस्था भानुभूपुत्रमन्दाः ।
शुभविरहितकेन्द्रैरस्तगैर्वाऽपि सौम्यैः
नृपतिजननयोगा यान्ति नाशं क्षणेन ॥ ९ ॥
पञ्चभिर्निम्नगैः खेटैरस्तं यातैरथापि वा ।
प्रयान्ति विलयं योगा भूभुजां ये प्रकीर्त्तिताः ॥ १० ॥
उल्कायाः पतने चैव निर्घातव्यतिपातयोः ।
केतोश्च दर्शने चैव यान्ति नाशं नृपोद्भवाः ॥ ११ ॥
अन्यैः क्रूरोत्पातैस्त्रिशङ्कुतारा यदोदयं यान्ति ।
सद्यः प्रयान्ति विलयं नृपयोगा भानुजो यदि विलग्ने ॥१२॥
कर्तारो नृपतीनां गगनसदो युद्धकाङ्क्षिणो मलिनाः ।
रूक्षा जर्जरदेहा विघ्नं जनयन्ति राजयोगस्य ॥ १३ ॥
परनीचं गते चन्द्रे क्षीणो योगो महीपतेः ।
नाशमायाति राजेव दैवज्ञप्रतिलोमगः ॥ १४ ॥
तुलायां पद्मिनीबन्धुस्त्रिंशांशे दशमे स्थितः ।
हन्ति राज्यं यथा लोभः समस्तगुणसञ्चयम् ॥ १५ ॥
जूकस्य दशमे भागे स्थितः कमलबोधनः ।

---

१ त्वशुभेन. २ लग्नवचन्द्रदृष्टः.

सहस्रं राजयोगानां मन्दमेव करोत्यसौ ॥ १६ ॥
स्वत्रिकोणगृहं केचित् स्वोच्चं याताः स्वमन्दिरम् ।
अतिनीचे रविश्चैको न तेषां फलसंभवः ॥ १७ ॥
गुरुर्मृगे विलग्नस्थो दुःखैः सन्तापयेन्नरम् ।
कामार्तमधनं वेश्या यद्वदिन्दुर्न चेत्स्वभे ॥ १८ ॥
एकेनापि शशाङ्को ग्रहेण केमद्रुमे यदि न दृष्टः ।
विघ्नयति राजयोगं मलिनाचारः प्रसूतः स्यात् ॥ १९ ॥
भिक्षामटति त्र्याद्यैर्नीचर्क्षगतैः सुदुःखितो मलिनः ।
सकलमहीभृत्पुत्रः परिभूतो जायते निःस्वः ॥ २० ॥
अत्यरिभवनं प्राप्तैः पञ्चादिभिरस्तगैश्च गगनचरैः ।
नाशं प्रयाति राजा यदि रविचन्द्रौ न तुङ्गस्थौ ॥ २१ ॥
सचिवो दानवेन्द्रस्य नीचांशे समवस्थितः ।
संप्राप्तमतुलं राज्यं नरैर्हापयते ध्रुवम् ॥ २२ ॥
राजयोगाः समाख्यातास्तेषां भङ्गश्च दारुणः ।
परीक्ष्य यत्नतः प्राज्ञः फलं ब्रूयाद्बलाबलात् ॥ २३ ॥

कमलभवनबन्धुः कन्ययालिङ्गिताङ्ग-
स्त्वलिनि कुजसुरेड्यौ चन्द्रमा मेषसंस्थः ।
न च यदि परिशेषैर्दृश्यते स्यात्स भूपः
प्रचलितगजमेघच्छादिताशा नभोभ्रः ॥ २४ ॥

इति कल्याणवर्मविरचितायां सारावल्यां राजयोगभङ्गो नामाष्टात्रिंशोऽध्यायः ॥

## एकोनचत्वारिंशोऽध्यायः ।

अस्मिन्नायुर्दाये यस्माद्भ्रान्तः समस्तलोकोऽयम् ।
तस्मात्पूर्वागमतः कथयामि निराकुलीकृत्य ॥ १ ॥
अंशोद्भवं विलग्नात्पैण्ड्यं भानोर्निसर्गजं चन्द्रात् ।
एतेषां यो बलवानेकतमस्तस्य कल्पयेदायुः ॥ २ ॥
लग्नदिवाकरचन्द्रास्त्रयोऽपि बलरिक्ततां यदा यान्ति ।

१ वश्यमिन्दुः.

परमायुषः स्वरांशं ददति खगा जीवशर्मोक्तम् ॥ ३ ॥
विलग्नादिकला भाज्या व्योमशून्ययमैः समाः ।
लभ्यन्तेऽर्कहता[1]: शेषा[2]: स्वमान[3]गुणि[4]तांशकाः ॥ ४ ॥
होरा सर्वबलोपेता राशितुल्या नियच्छति ।
वर्षाण्यन्यानि मासादिभागैस्त्रैराशिकात्पुनः ॥ ५ ॥
वर्गोत्तमे स्वभवने स्वद्रेक्काणे नवांशके ।
द्विगुणं सम्प्रयच्छन्ति त्रिगुणं वक्रतुङ्गयोः ॥ ६ ॥
यदा तूपचयः सर्वः स्वराश्यादिस्थि[5]तैर्ग्रहैः[6] ।
समस्तवर्गणा तत्र कर्तव्या शास्त्रचिन्तकैः ॥ ७ ॥
केन्द्रादिसंस्थिते खेटे सकलद्विगुणैककाः ।
शंसन्ति वर्गणां केचित् न च चूडामणेर्मतम् ॥ ८ ॥
बहुताडनसम्प्राप्तौ यां करोत्येकवर्गणाम् ।
वराहमिहिराचार्यैः सा न दृष्टा पुरातनैः ॥ ९ ॥
रिपुराशौ त्रिभागोनमर्धोनं निम्नगास्तगाः ।
दायं ग्रहाः प्रयच्छन्ति नास्तगौ सितभानुजौ ॥ १० ॥
सर्वमर्धं तृतीयांशश्चतुर्थः पञ्चमस्तथा ।
षष्ठश्चांशक्षयं याति व्ययाद्वामं ग्रहे स्थिते ॥ ११ ॥
सौम्ये चार्धमितो याति नाशं बहुभिरेकगैः ।
एक एव बली हन्ति स्वायुषः सर्वदा ग्रहः ॥ १२ ॥
एकोनविंशतिर्भानोः शशिनः पञ्चविंशतिः ।
तिथयः क्षितिपुत्रस्य द्वादशैव बुधस्य तु ॥ १३ ॥
गुरोः पञ्चदशाब्दानि शुक्रस्याप्येकविंशतिः ।
विंशती रविपुत्रस्य पिण्डायुः स्वोच्चसंस्थितेः ॥ १४ ॥
स्वोच्चसि[10]द्धो ग्रहः शोध्यः षड्भाश्यूनो भमण्डलात् ।
स्वपिण्डगुणितो भक्तो [11]राशिमानेन वत्सराः ॥ १५ ॥
पूर्वोक्तं चिन्तयेत्सर्वं वक्रं मुक्त्वारिराशिषु ।

---

१ हतात्, नताः. २ शेषं. ३ नाम. ४ ताः स्वकाः. ५ स्थिते. ६ ग्रहे. ७ गाम्, काम्. ८ तच्च ननु, तत्तु. ९ वर्गण. १० शुद्धो. ११ भादि.

क्षयस्तत्र प्रकर्तव्यो नीचेऽर्धं वृद्धिरुच्चगे ॥ १६ ॥
लग्नदायोंऽशतुल्यः स्यादन्तरे चानुपाततः ।
तत्पतौ बलसंपन्ने राशितुल्यं स्वभाधिपे ॥ १७ ॥
लग्नांशलिप्तिका हत्वा प्रत्येकं विहगायुषा ।
भक्त्वा मण्डललिप्ताभिर्लब्धं वर्षाद्विशोधयेत् ॥ १८ ॥
स्वायुषो लग्नगे क्रूरे लब्धस्यार्धं शुभेक्षिते ।
एवमेव प्रकर्तव्यं जीवशर्मोक्तचन्द्रजे ॥ १९ ॥
विंशतिरेकं द्वितयं नव धृतिरिह विंशतिश्च पञ्चाशत् ।
वर्षाणामपि संख्याः सूर्यादीनां निसर्गभवाः ॥ २० ॥
मीनोदयेंशे नवमे पञ्चविंशतिलिप्तिके ।
गवि सौम्यैः स्वतुङ्गस्थैः शेषैरायुः परं भवेत् ॥ २१ ॥
कर्किलग्ने गुरुः सेन्दुः केन्द्रगौ बुधभार्गवौ ।
शेषैस्त्रिलाभषष्ठस्थैरमितायुर्भवेन्नरः ॥ २२ ॥
द्विघ्नाः षष्टिर्निशाः पञ्च परमं नरदन्तिनाम् ।
द्वात्रिंशद्वाजिनामायुः छागादीनां तु षोडश ॥ २३ ॥
खरोष्ट्रयोः पञ्चवर्गं एको पोह्यं वृषादिषु ।
शुनां तु द्वादश प्रोक्तं गणितं परमायुषम् ॥ २४ ॥
तत्तत्परं प्रमाणेन हत्वैषामायुरादिशेत् ।
पथ्याशिनां शीलवतां नराणां
सद्वृत्तभाजां विजितेन्द्रियाणाम् ।
एवंविधानामिदमायुरत्र
चिन्त्यं सदा वृद्धमुनिप्रणीतम् ॥ २५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां आयुर्दायो नामैकोनचत्वारिंशोऽध्यायः ॥

---

## चत्वारिंशोऽध्यायः ।

आयुषो येन यद्दत्तं सा दशा तस्य कीर्त्तिता ।
स्वदोषगुणयोगेन स्वदशा सुफलप्रदा ॥ १ ॥

---

१ युक्ते; पृक्ते. २ वर्षादि. ३ परमे. ४ भव. ५ एका. ६ वृद्धिं समाप्नोति मुनिप्रवादः, नित्यं सदा वृद्धमुनिप्रवादः.

दिवारात्रिप्रसूतस्य रविशुक्रपुरःसराः ।
मणित्थस्त्वाह तज्ज्ञानं फलसाम्ये[1] न तद्दशाः ॥ २ ॥
लग्नार्कशीतरश्मीनां यो बली तस्य चाग्रतः ।
तत्केन्द्रादिस्थितानां च दशाः स्युः सत्यभाषिते ॥ ३ ॥
होरा दिनेशशशिनां प्रबलो भवेद्य-
स्तत्कण्टकादिषु गताः कथिता दशेशाः ।
पूर्वा दशाऽतिबलिनः सदृशेऽब्दवृद्धेः
साम्ये भवेच्च शरदां प्रथमोदितस्य ॥ ४ ॥
लग्नार्कशीतरश्मीनां यदि पूर्णबलं[2] भवेत् ।
तदा सत्यमतं श्रेष्ठमन्यदा त्वपरा दशा ॥ ५ ॥
स्वोच्चस्वराशिनिजभागसुहृद्गृहस्थाः
सम्पूर्णवीर्यरुचिरा बलिनः स्वकाले ।
मित्रोच्चभागसहिताः शुभदृष्टियुक्ताः
श्रेष्ठां दशां विदधति स्ववयःसु खेटाः ॥ ६ ॥
नीचशत्रुगृहं प्राप्ताः शत्रुनिम्नांशसूर्यगाः ।
विवर्णाः पापसंबन्धा दशां कुर्युरशोभनाम् ॥ ७ ॥
तुङ्गाच्च्युतस्य हि दशा सुहृदुच्चांशेऽवरोहिणी मध्या ।
नीचाद्रिपुनीचांशे ग्रहस्य चारोहिणी कष्टा ॥ ८ ॥
सविता दशाफलानां पाचयिता चन्द्रमाः प्रपोषयिता ।
राशिविशेषेणेन्दोरतः फलोक्तिर्दशारम्भे ॥ ९ ॥
मूलदशायामिन्दोः कन्यासु प्रेक्षिते चन्द्रे ।
पण्याङ्गनाभिरनिशं समागमं प्राहुरिह यवनाः ॥ १० ॥
सौम्यस्त्रीधनलाभः कुलीरगेन्दौ भवेद्दशारम्भे ।
कन्यां दूषयति नरः कुजभवने हन्ति वा युवतिम् ॥ ११॥
विद्याशास्त्रज्ञानं मित्रप्राप्तिं करोति बुधराशौ ।
शौक्रेऽन्नपानमतुलं सौख्यं चन्द्रे[3] विनाशं च ॥ १२ ॥
सुखधनमानाज्ञाप्तिं जीवगृहे दिशति शीतांशुः ।
परिणतवयसमरूपां सौरगृहे वर्धकीं[4] वाऽपि ॥ १३ ॥

१ साम्यं न सा दशा. २ पूर्णबलो. ३ चन्द्रेऽरिनाशं. ४ वञ्चकीं.

दुर्गारण्यनिवासं कर्षणगृहकर्मसेतुकर्मान्तम् ।
सिंहे शशी प्रकुरुते स्त्रीपुत्रविवादमरतिं च ॥ १४ ॥
वन्ध्वर्थक्षयरोगाः कुजसौराभ्यां बुधेन पाण्डित्यम् ।
दृष्टे तद्योनिसमैः शेषैश्चन्द्रे निशाफलैर्योगः ॥ १५ ॥
पाकस्वामिनि लग्ने सुहृदां वर्गेऽथवाऽपि सौम्यानाम् ।
श्रेष्ठदशायां सूतिर्लग्नादुपचयगृहैस्थैर्वा ॥ १६ ॥
मित्रोच्चोपचयस्थाने त्रिकोणे सप्तमे तथा ।
पाकेश्वरात् स्थितश्चन्द्रः कुरुते स्वंफलां दशाम् ॥ १७ ॥
विपरीते स्थिते चन्द्रे दशादौ पर्यवस्थिते ।
स्वोच्चगस्यापि खेटस्य दशा न प्रतिपूजिता ॥ १८ ॥
शत्रुनीचनवांशेषु शस्ते राशौ ग्रहस्य च ।
दशा मिश्रफला रिक्ता विबलस्य दशा मता ॥ १९ ॥
द्रेक्काणे च दशा मूर्तेः पूजिता मध्यमाधमा ।
चरे मिश्रप्रतीपा च स्थिरे पापेष्टमध्यमाः ॥ २० ॥
चन्द्रावनेयसोमजसितजीवदिवाकरार्किहोराणाम् ।
क्रमशो दशापरिग्रह इष्टो नैसर्गिकश्चैव ॥ २१ ॥
स्वोच्चस्वकालबलिनः सम्पूर्णबलस्य वा निसर्गभवा ।
उत्तमशुभफलदासौ ग्रहस्य नित्यं दशा भवति ॥ २२ ॥
स्वराशौ स्वत्रिकोणे च स्वांशे च शुभमध्यमा ।
स्वोच्चाभिलाषिणश्चैव मित्रराश्यादिसंस्थिते ॥ २३ ॥
शुभाधमदशा ज्ञेया विपरीतमतस्थिते ।
अनेनैव विधानेन विज्ञेया पापदा दशा ॥ २४ ॥
भानुदशायां लभते नवौषधाद्ध्वविषदौस्थ्यनैरर्थ्यात् ।
गिरिदन्तचर्मवह्निक्रौर्यनरेन्द्राहवाद्यैश्च ॥ २५ ॥
नृपतेरर्थावाप्तिं धैर्यं भूयस्तथोद्यमं तैक्ष्ण्यम् ।

---

१ स्फूर्तिः. २ गृहस्थो, गृहस्थे. ३ सुफलां, सफलां. ४ विपरीततमतश्चन्द्रे. ५ द्रेक्काणैश्च, द्रेकाणस्य. ६ मिश्रे. ७ अनुपम. ८ स्याद्ध. ९ पौरुषमेधाध्व-विषयकालनैरर्थान्. १० द्वैरंभूयो.

ख्यातिं प्रतापवृद्धिं श्रेष्ठत्वं भूपतित्वं च ॥ २६ ॥
भृत्यार्थचोरचक्षुः शस्त्राग्न्युदकक्षितीश्वराद्बाधाः ।
सुतपत्नीबन्धुजनैर्निपीडितः स्याच्च पापरतिः ॥ २७ ॥
क्षुत्तृष्णार्त्तिः शोको हृत्पीडा पैत्तिकास्तथा रोगाः ।
गात्रच्छेदो भवति हि सूर्यदशायामनिष्टायाम् ॥ २८ ॥
चन्द्रदशायां वित्तं स्त्रीसंगममार्दवात्पथि विहारात् ।
जलतुहिनक्षीररसैरिक्षुविकारैस्तथा क्रीडा ॥ २९ ॥
द्विजमन्त्राणां लब्धिः पुष्पाम्बरसेवनं मधुरता च ।
अर्थविनाशमकस्मात् भूपसदो(?) द्वेष्यतां लभते ॥ ३० ॥
तैष्ण्यादवाप्तसिद्धिः पूजां प्राप्नोति गुरुनृपाभ्यां च ।
मेधाधृतिपुष्टिकरी चन्द्रदशा शोभना नित्यम् ॥ ३१ ॥
कुरुते भयं कुलस्य च चन्द्रदशा स्वकुलविग्रहं कष्टम् ।
निद्रालस्यं स्त्रीणां भयजननी शोकदा रतिदा ॥ ३२ ॥
भौमदशायां लभते नृपाग्निचोरप्रयोगरिपुमर्दैः ।
व्यालविषशस्त्रबन्धनसुतैक्ष्ण्यकूटैश्च धनलाभम् ॥ ३३ ॥
क्षित्याजाविकता[1]त्रिकस्वर्णावश्यादिभिस्तथा द्यूतैः ।
आसवकषायकटुकै रसैश्च धनधान्यभाग्भवति ॥ ३४ ॥
मित्रकलत्रविरोधो भ्रातृसुतैर्विग्रहश्च तृष्णा च ।
मूर्च्छा शोणितदोषः शाखाच्छेदो व्रणश्चापि ॥ ३५ ॥
परदाररतिर्द्वेष्यो गुरुसत्यानामधर्मनिरतश्च ।
पित्तकृतैरपि दोषैरभिभूतो[2] मानवो भवति ॥ ३६ ॥
सौम्यदशायां प्राप्ते[3] मित्रादाढ्याद्धनस्य सम्प्राप्तिः ।
दीक्षितनृपतेर्द्यूताद्वणिक्जनाच्चापि सम्भवति ॥ ३७ ॥
वेसरमहीसुवर्णं शुक्तिद्रव्यं यशः प्रशंसा च ।
दूत्यं सौख्यमतुल्यं सौभाग्यं मतिचयख्यातिः ॥ ३८ ॥
धर्मक्रियासु सिद्धिर्हास्यरतिः शत्रुसंक्षयो भवति ।
गणितालेख्यलिपीनां कौतुकभागी सदा पुरुषः ॥ ३९ ॥

---

१ ताम्रकसुवर्ण. २ ताक्षो. ३ पुत्रान्.

पीडां धातुत्रितयात् पारुष्यं बन्धनं तथोद्वेगम् ।
मानसशोकं वाऽपि बुधस्य कष्टा दशा कुरुते ॥ ४० ॥
त्रिदशपतिगुरुदशायां मन्त्री नृपनृत्यनीतिभिर्वित्तम् ।
मानगुणानां लब्धिरतिप्रतापः सुहृद्विवृद्धिश्च ॥ ४१ ॥
कान्तासुवर्णवेसरगजाश्वभोगी सदा पुरुषः ।
माङ्गल्यपौष्टिकानां लाभो द्विषतां विनाशश्च ॥ ४२ ॥
लाभो भवति नराणां प्रीतिः सद्भूमिपैः सार्धम् ।
जनताया नृपवक्त्रात्पण्याग्राद्गुरुजनाच्च धनलाभः ॥ ४३ ॥
व्यजनातपत्रसुमनो वस्त्रध्वजपेयभक्षणादीनाम् ।
गात्रश्चयपृथुशोकं पङ्गुत्वं गुल्मकर्णरोगांश्च ।
पुंस्त्वविनाशं मेदःक्षयं नृपतितो भयं समाप्नोति ॥ ४४ ॥
शुक्रदशायां विजयः क्ष्माभवनविलासशयनपत्नीनाम् ।
माल्याच्छादनभोजनयशःप्रमोदो निधिप्राप्तिः ॥ ४५ ॥
गेयरतिः स्त्रीसङ्गो नृपतेः कृषितो धनस्य सम्प्राप्तिः ।
ज्ञानेष्टसौख्यसुहृदां मन्मथयोग्योपकरणानाम् ॥ ४६ ॥
कुलगुणवृद्धैर्वादो यानासनसंभवानि पापानि ।
स्त्रीनृपतिकृतावश्यं लोकविरुद्धैः सहप्रीतिः ॥ ४७ ॥
सौरेर्दशां प्रपन्नः प्राप्नोति पुमान् खरोष्ट्रमहिषाद्यान् ।
कुलटां जरदङ्गीं वा कुलुत्थतिलकोद्रवादींश्च ॥ ४८ ॥
बृन्दग्रामपुराणामधिकारभवं च सत्कारम् ।
लोहत्रपुकादीनां स्वकीयपक्षस्थिरास्पदं चैव ॥ ४९ ॥
वाहननाशोद्वेगस्त्वरतिः स्त्रीस्वजनविप्रयोगश्च ।
युद्धेष्वपजयदोषो मद्यद्यूतोद्भवो मरुत्कोपः ॥ ५० ॥
पुण्येष्वसिद्धिकलहं बन्धनतन्द्रीश्रमं तथाव्यङ्गम् ।
भृत्यापत्यविरोधो भवति च कष्टा यदा दशा सौरेः ॥ ५१ ॥
सौम्ये पापफलं प्रोक्तं सामान्यं स्वदशास्विदम् ।
विशेषेण प्रवक्ष्यामि प्रत्येकं फलभेदतः ॥ ५२ ॥

१ भोगो. २ विशेषतः क्षीणः. ३ चमत्कारं. ४ सिद्ध.

स्वोच्चनीचत्रिकोणर्क्षं केन्द्रं शत्रुगृहं तथा ।
पञ्चप्रकारसंयुक्ता दशा भानोः प्रकीर्तिताः ॥ ५३ ॥
राज्यं ददाति विपुलं दशा रवेर्लग्नसंस्थितस्य नृणाम् ।
केन्द्रस्थितस्य दद्यात्कटिगलनेत्रप्रकोपमरिगस्य ॥ ५४ ॥
नीचस्य दशा भानोरक्ष्णोर्नाशं ज्वरं शिरोरोगम् ।
बन्धनमन्याश्च रुजः कुष्ठामयदर्शनं चिह्नम् ॥ ५५ ॥
स्वोच्चप्राप्तस्य दशा ददाति राज्यं सहस्रकिरणस्य ।
तुरगातपत्रचामरकरीन्द्रसंवर्द्धितं सम्यक् ॥ ५६ ॥
सवितुर्दशा च पुंसो विदधाति[1] स्वरा त्रिकोणसंस्थस्य ।
उत्तमविषयपतित्वं विध्वस्ताशेषदुःखस्य ॥ ५७ ॥
शत्रुगृहेऽर्कदशायां नयनविनाशो भवेच्च कुब्जत्वम् ।
ज्वालावक्रजरोगा भवन्ति कुमयः[2] परिभवाश्च ॥ ५८ ॥
अष्टमगतस्य भानोर्दशा क्षयं नयति सर्वगात्रं च ।
भ्रमयति देशाद्देशं प्रमापयत्यपि च विक्लिष्टम् ॥ ५९ ॥
सामान्यतश्च षोढा चन्द्रदशा भिद्यते समासेन ।
स्वोच्चसुहृच्छत्रुगृहे नीचे क्षीणे प्रपूर्णे च ॥ ६० ॥
तत्रोच्चदशा राज्यं नीचदशा मरणमरिदशा बन्धम् ।
कथयति नलिनीशत्रोर्मित्रदशा स्वस्वजनसम्प्राप्तिम् ॥ ६१ ॥
क्षीणेन्दुदशायोगे चिह्नान्येतानि लक्षयेद्विद्वान् ।
उदरामयज्वरशिरो नयनोत्कोपप्रतिश्रयाच्चापि ॥ ६२ ॥
बलिनः परिपूर्णस्य च शशिनः कुरुते सदा दशा पुंसाम् ।
दयितासहस्रपरिवृतमन्तःपुरमुत्तमस्त्रीकम् ॥ ६३ ॥
भवति नरस्य भ्रंशो विषयस्यान्तःपुरस्य भृत्यानाम् ।
अष्टमचन्द्रदशायां म्रियते च स्वजनपरिभूतः ॥ ६४ ॥
यन्त्रतृणकाष्ठगोमयवंशकरञ्जीफलोदकाजीवी ।
भवति कदन्नकुचेली नृपोऽपि भृतकोऽरिगृहदशायाम् ॥ ६५ ॥
लग्नगृहगस्य हि दशा मण्डललाभं तथोच्चगस्यापि ।
केन्द्रस्थितस्य कुरुते धनवाहनदेशसम्प्राप्तिम् ॥ ६६ ॥

१ पुरा. २ कुनयः.

कष्टदशा[1] व्यसनकरी मरणं च करोति नैधनस्थदशा ।
अस्तमितग्रहपाको बन्धनमात्रेण पीडयति ॥ ६७ ॥
वक्रोपगस्य हि दशा भ्रमयति च कुलालचक्रवत्पुरुषम् ।
व्यसनानि[2] रिपुविरोधं करोति पापस्य न शुभस्य ॥ ६८ ॥
रिक्तातिरिक्त[3]निम्नातिनिम्नरिपुहृतिरिपुगृहदशासु ।
पृथ्वीपतिरपि भूत्वा स्वभृत्यभृत्यो भवेत्पुरुषः ॥ ६९ ॥
देशत्यागो व्याधिर्भ्रंशोत्थानं मुहुर्मुहुः कलहः ।
बन्धनमरातिजनितं रिपुराशिगतस्य हि दशायाम् ॥ ७० ॥
महितकरिगलितमदजलसेकक्ष्मापीठवारितरजस्कः ।
राजा कष्टसहायो रिक्तदशायां ध्रुवं भ्रमति ॥ ७१ ॥
अङ्गप्रत्यङ्गानां छेदं विदधाति षष्ठशत्रुदशा ।
कोणद्यूनारिदशा निधनारिदशा शिरश्छेदम् ॥ ७२ ॥
रिपुभयविदेशगमनं बन्धनरोगादिपीडनं भवति ।
नीचस्थग्रहपाके राजाभिभवो ध्रुवं पुंसाम् ॥ ७३ ॥
चिन्ता स्वप्नानुभवैः परिणमति फलं विहीनवीर्यस्य ।
पञ्चमहापुरुषोक्ताध्यायांस्तांस्तान्नियोजयेदत्र ॥ ७४ ॥
आदौ दशासु फलदः शीर्षोदयराशिसंस्थितो विहगः ।
उभयोदये च मध्ये स्वान्त्ये पृष्ठोदये च नीचर्क्षे ॥ ७५

इति कल्याणवर्मविरचितायां सारावल्यां मूलदशाफलं नाम चत्वारिंशोऽध्यायः ॥

---

## एकचत्वारिंशोऽध्यायः ।

अर्धमेकस्थितो भागं त्रिभागं सुतधर्मयोः ।
सप्तमे सप्तमं भागं चतुर्थं चतुरश्रयोः[4] ॥ १ ॥
मूलं दशाधिनाथस्य कृत्वांशं स्वगुणैर्ग्रहः ।
करोत्यन्तर्दशां सत्यां बली हरति भागशः[5] ॥ २ ॥
शुभस्य शुभदः पूर्णः क्रूरस्याशुभदो भवेत् ।
केन्द्रादिविधिना चान्ये केचित्पाकक्रमेण तु ॥ ३ ॥

---

१ षष्ठदशा. २ व्यसनालि. ३ तुच्छातितुच्छ. ४ चतुरश्रये. ५ भागभाक्.

सत्योक्तं तूच्यते कश्चिद्ददाति बलवान् ग्रहः।
नित्यं पाठक्रमात्कार्यः शेषास्तु परिपाकदाः॥ ४॥
भागाः सद्दशाः सहिता दशाब्दपिण्डस्य भागहारोऽयम्।
प्रत्यंशताडितः स्यात् पृथक् पृथक्[1]त्वन्तरदशाः स्युः॥ ५॥
एकर्क्षसंस्थितदशा प्रदिशति बन्धं स्वनाशं वा।
जनयति कण्टकसहिता त्रिकोणसंस्थस्य सुखमतुलम्॥६॥
एकद्वित्रिचतुर्णां नक्षत्रे रिपुदशा ग्रहाणां स्यात्।
व्याधिक्लेशविवादान् नृपतेश्च भयं तदा[2] जनयेत्॥ ७॥
दारमरणं च जनयति सप्तमगान्तर्दशा प्रणाशं वा।
शत्रोर्दासीकरणं परपुरुषेणोपभोगं वा॥ ८॥
अन्तर्दशा ग्रहाणामष्टमधाम्नि प्रमापयेत्पुरुषम्।
कुरुते च धनविनाशं शत्रुगता बन्धनं च विध्वंसम्॥ ९॥
अन्तर्दशा यदा (स्याद्) द्वित्रिचतुर्णामेकराशिसंस्थानाम्।
बन्धनविनाशदैन्ये[3] विदधात्यशुभं ग्रहाणां तु॥ १०॥
चतुर्थस्थानसंस्थस्य ग्रहस्यान्तर्दशा भवेत्।
मित्रारोग्यकरं[4] नित्यं सौख्यमानविवर्धनम्[5]॥ ११॥
शमयति रिपुप्रतापं नीरोगत्वं करोति धनलाभम्।
भानुदशायां चन्द्रः प्रविशंस्तन्नास्ति यन्न शुभम्॥ १२॥
विद्रुमसुवर्णमणयः सङ्ग्रामजयः प्रचण्डता पुंसः।
असृजो दशाप्रवेशे सूर्यदशायां भवति सौख्यम्॥ १३॥
दद्रूविचर्चिकाद्यैः पाम्ना कुष्ठैश्च गर्हितशरीरः।
तरणिदशायां प्रविशति बुधो यदा स्यादरेर्वृद्धिः॥ १४॥
व्याधिभिररिभिर्व्यसनैः पापैश्च विमुच्यते तथाऽलक्ष्म्या।
अनुयाति धर्मपदवीं जीवस्यान्तर्दशा यदा भानोः॥ १५॥
शिरसो रुक् गलरोगश्छिद्रं सहसा ज्वरः शूलम्।
तपनदशायां शुक्रे देशत्यागो भवेदरिभिः॥ १६॥
आदित्यस्य दशायां शनैश्चरान्तर्दशा यदा भवति।
नृपपरिभूतो दीनो विपक्षसार्थेन हतशक्तिः॥ १७॥

१ चान्तर. २ तथा. ३ दैन्यं. ४ करी. ५ वर्धनीम्.

क्षयरोगभयं शौर्यं नृपप्रभावं सदा विभवम् ।
चन्द्रदशायां पुंसो भानुः कुरुतेऽर्थलाभं च ॥ १८ ॥
पित्तासृग्वह्निभयं क्लेशं रोगं करोति वक्रदशा ।
चन्द्रदशायां च भयं प्रमोषणं[1] चैव चोरैश्च ॥ १९ ॥
चन्द्रदशायां ज्ञदशाप्रवेशने चिह्नमुत्तमो लाभः ।
गजवाजिनां धनानां सम्प्राप्तिः सौख्यमतुलं च ॥ २० ॥
चन्द्रदशायां प्राप्ता त्रिदशेड्यदशा करोति धनलाभम् ।
यत्नोपात्तमकस्माद्वस्त्रालङ्कारविविधहस्त्यश्वम् ॥ २१ ॥
तुहिनकरस्य दशायां प्रविशत्यन्तर्दशा यदाऽऽस्फुजितः ।
जलयानहारभूषणबहुपत्नीभिः समागमं कुरुते ॥ २२ ॥
स्वजनायासवियोगं रोगाभिभवं तथा महाव्यसनम् ।
चन्द्रदशायां सौरिः करोति निःसंशयं पुंसाम् ॥ २३ ॥
चण्डं साहसनिरतं नरेन्द्रसंग्रामपूजितं धान्त्याम्[2] ।
विविधधनागमयुक्तं भौमदशायां करोति रविः ॥ २४ ॥
विविधधनागमलाभं सौख्यं बहुमित्रसम्प्राप्तिम् ।
वक्रदशायां चन्द्रः करोति मुक्तामणिप्रभृतीन् ॥ २५ ॥
दिशति भयं शत्रुभ्यो वाजिगजानां प्रमोषणं चोरैः ।
दाहं च यदा प्रविशति भौमदशायां बुधस्य दशा ॥ २६ ॥
वक्रदशायां च गुरोः सुचरितकरणेन शुभधर्मा ।
नृपतिर्विशुद्धचेताः पुण्यानि करोत्यनन्तानि ॥ २७ ॥
रुधिरदशायां शुक्रप्रवेशने भवति सङ्गरभयार्त्तिः ।
व्याधिव्यसनायासैर्धनापहारः प्रवासैश्च ॥ २८ ॥
व्यसनानि व्यसनानां भवन्त्युपर्युपरि जनविनाशश्च ।
वक्रदशायां रविजे प्रविशति चान्तर्दशायां हि ॥ २९ ॥
इन्दुसुतस्य दशाया प्रविशति सूर्यो यदा तदा चिह्नम् ।
कनकाश्वविद्रुमगजान् विदधाति श्रियमकस्माच्च ॥ ३० ॥
प्रविशन्ती चन्द्रदशा बुधस्य कण्डूं करोति कुष्ठं च ।
क्षयरोगमङ्गभङ्गं गजाद्भयं वाहनविनाशम् ॥ ३१ ॥

१ प्रमापणम्. २ धन्यं.

रिपुरोगपापमुक्तः पुण्यानि करोति भूपतेर्मन्त्री ।
जीवे चरति दशायां बुधस्य पुरुषो भवन्नियतम् ॥ ३२ ॥
मस्तकशूलनिरोधैः[1] नानाक्लेशैश्च युज्यते जन्तुः ।
इन्दुसुतस्य दशायां भौमस्यान्तर्दशा यदा भवति ॥ ३३ ॥
गुरुविबुधातिथिभक्तो वस्त्रालङ्कारपुष्पगन्धरुचिः ।
इन्दुसुतस्य दशायां शुक्रस्यान्तर्दशा यदा भवति ॥ ३४ ॥
षण्डमुखकामसेवी विलुप्तधर्मार्थभोगसुतवित्तः ।
भवति नरोऽत्र दशायां बुधस्य मन्दो यदा चरति ॥ ३५ ॥
रिपुभयकलहैर्मुक्तः प्रयाति गुरुतां नरेन्द्रस्य ।
विक्रमसाहससौख्यैर्जीवदशायां रवौ चरति ॥ ३६ ॥
पत्नीसहस्रभर्ता जितरोगरिपुः परोन्नतिं लभते ।
प्रकटयति राजचिह्नं चन्द्रदशा गुरुदशायां हि ॥ ३७ ॥
तीक्ष्णः परोपतापी शूरो रणलब्धकीर्त्तिधनः ।
सौख्यमनन्तं लभते जीवदशायां कुजे चरति ॥ ३८ ॥
वेश्यामद्यव्यसनैः परिभूतो भवति निर्धनः सोऽपि[2] ।
सौम्ये जीवदशायां विलुप्तधर्मो भवेत्पुरुषः ॥ ३९ ॥
व्याधिविनाशं सौख्यं मित्रैः सह सङ्गतिं तथा पूजाम् ।
मातापित्रोर्भक्तिं जीवदशायां बुधे[3] लभते ॥ ४० ॥
रिपुभयविनाशदुःखैरभिभूतो ब्राह्मणोपजीवी च ।
जीवदशायां शुक्रे प्रविशति नित्यं भवेत्पुरुषः ॥ ४१ ॥
वेश्यामद्यद्यूतैरभिभूतो महिषखरयुक्तः ।
सौरे जीवदशायां विलुप्तधर्मो भवेत्पुरुषः ॥ ४२ ॥
गण्डोदराक्षिरोगैः क्षितिपतितो बन्धनादिभिस्तप्तः ।
शुक्रदशायां सूर्ये विचरति नूनं भवेत्पुरुषः ॥ ४३ ॥
अन्तर्दशा दशायां सितस्य शशिनो यदा भवति चिह्नम् ।
नखदशनशिरोरोगैः सह भवति च कामिलारोगः ॥ ४४ ॥
पित्तासृक्कृतरोगो भूलाभः संश्रयो नृपतितश्च ।
शुक्रदशायां भौमे मन्दोत्साहः पुमान् भवति ॥ ४५ ॥

---

१ विरोधैः. २ निर्धनो भवति. ३ बुधो.

शुक्रदशायां पुंसां बुधस्य चान्तर्दशा यदा भवति ।
युवतिकृतं धनलाभं सौख्यं च मनोरथं[1] लभते ॥ ४६ ॥
अन्तर्दशा दशायां भृगोर्गुरोर्धर्मशीलसम्पत्तिम् ।
विदधाति विषयराज्यं पुंसां धनरत्नमतिसौख्यम् ॥ ४७ ॥
वृद्धस्त्रीभिः क्रीडां पुरनगरगणाधिपत्यमरिनाशम् ।
शुक्रदशायां सौरिः करोति बहुमित्रसंयोगम् ॥ ४८ ॥
धनपुत्रदारनाशं भयमतुलं सन्दधाति पुरुषस्य ।
रविपुत्रस्य दशायां सूर्यस्यान्तर्दशा न सन्देहः ॥ ४९ ॥
स्त्रीमरणं हरणं वा बन्धुवियोगं पुनः पुनः कलहम् ।
अन्तर्दशा दशायां शनेः शशाङ्कस्य विदधाति ॥ ५० ॥
देशभ्रंशं व्याधिं दुःखानि करोत्यनेकरूपाणि ।
अन्तर्दशा दशायां रविजस्य महीसुतस्य यदा ॥ ५१ ॥
सौभाग्यसौख्यविजयप्रमोदसत्कारमानधनलाभम् ।
सौरिदशायां सौम्यो विदधात्यन्तर्दशाप्राप्तः ॥ ५२ ॥
अनुयाति शिष्टपदवीं ग्रामादिकलत्रसौख्यसंम्पन्नैः[2] ।
रवितनयस्य दशायां प्रविशति जीवे सदा पुरुषः ॥ ५३ ॥
वर्धयति मित्रपक्षं भिनत्ति शोकान्यशः प्रकाशयति ।
सौरदशायां शुक्रः पत्नीधनविजयलाभकरः ॥ ५४ ॥
नीचोच्चादिविभेदेन शत्रुमित्रबलाबलम् ।
अन्तर्दशासु मतिमान् चिन्तयेच्च प्रयत्नतः ॥ ५५ ॥
अन्तर्दशा शुभायां मूलदशायां शुभा यदा भवति ।
भवति तदा बहुसौख्यं धनलब्धिरतीव पुरुषाणाम् ॥ ५६ ॥
रविकिरणमुषितदीप्तेर्दशा ग्रहस्य मलिनां तनुं कृत्वा ।
मानयशोर्थविलासप्रतापरूपोद्यमान् हन्ति ॥ ५७ ॥
होरा जन्माधिपतेः[3] शत्रुदशायां नरोऽतिमूढमतिः[4] ।
राज्याच्च्युतो विपक्षैरभिभूतोऽन्यं समाश्रयति ॥ ५८ ॥
व्योमलग्नप्रपन्नस्य दशायां राज्यमाप्नुयात् ।
नरेन्द्राणां समायोगे सुवीर्यस्याथवा पुनः ॥ ५९ ॥

---

१ मनोरमं. २ संपत्तिम्. ३ धिपयोः. ४ विमूढ.

लग्ने जीवः सितबुधयुतः सप्तमस्थोऽर्कपुत्रः
कर्मप्राप्तो दहनकिरणो भोगिनां जन्म कुर्युः ।
केन्द्रे सौम्या न शुभगृहगा यत्र पापाभिधाना
यद्येवं स्याच्छबरनृपतिर्जायते वित्तवांश्च ॥ ६० ॥

इति कल्याणवर्मविरचितायां सारावल्यां अन्तर्दशाफलो नामैकचत्वारिंशोऽध्यायः॥

## द्विचत्वारिंशोऽध्यायः ।

क्रूरदशायां क्रूरः प्रविश्य चान्तर्दशां यदा कुरुते ।
पुंसः[1] स्यात्सन्देहस्तदाऽरियोगः सदैव महान् ॥ १ ॥
क्षितितनयस्य दशायां रविजस्यान्तर्दशा यदा विशति ।
बहुकालजीविनामपि मरणं निःसंशयं कुरुते ॥ २ ॥
क्रूरराशौ स्थितः पापः षष्ठे स्यान्निधनेऽपि वा ।
तत्स्थितेनारिणा दृष्टः स्वपाके मृत्युदो ग्रहः ॥ ३ ॥
विलग्नाधिपतेः शत्रुर्लग्नस्यान्तर्दशां गतः ।
करोत्यकस्मान्मरणं सत्याचार्यः[2] प्रभाषते ॥ ४ ॥

इति कल्याणवर्मविरचितायां सारावल्यां दशारिष्टफलं नाम द्विचत्वारिंशोऽध्यायः ॥

## त्रिचत्वारिंशोऽध्यायः ।

प्रवेशे बलवान् खेटः शुभैर्वा[3] सुनिरीक्षितः ।
सौम्याधिमित्रवर्गस्थो मृत्यवे न भवेत्तदा ॥ १ ॥
मूलं[4] दशाधिनाथस्य विबलस्य दशा यदा ।
बलिनः स्यात्तदा भङ्गो दशारिष्टस्य तद्ध्रुवम् ॥ २ ॥
युद्धे च विजयी तस्मिन् ग्रहयोगे शुभे[5] यदि ।
दशायां न भवेत्कष्टं स्वोच्चादिषु च संस्थितः ॥ ३ ॥

इति कल्याणवर्मविरचितायां सारावल्यां दशारिष्टभङ्गो नाम त्रिचत्वारिंशोऽध्यायः ॥

१ पुंसां. २ चार्यप्रभाषिते. ३ र्वा सं. ४ मूला. ५ शुभो.

# चतुश्चत्वारिंशोऽध्यायः।

अत्युग्रमतिद्रव्यं महान्तमपि भास्करः स्वतुङ्गस्थः ।
मृष्टाशनाम्बराढ्यं सुभूषणं शीतगुः कुरुते ॥ १ ॥
तेजस्विनं कुतनयो दुष्प्रसहं गर्वितं प्रवासरतम् ।
मेधाविनं कुलाढ्यं सुनिपुणवाक्यं बुधः स्वोच्चे ॥ २ ॥
विख्यातं गुरुराढ्यं विद्वांसं[1] सत्कृतं कुशलम् ।
स्वोच्चे भृगोश्च तनयो विलासहास्यप्रगीतनृत्तरतम् ॥ ३ ॥
स्वोच्चस्थो रवितनयो नृपलब्धनियोगमभिजनयेत् ।
ग्रामपुराधिपतित्वमरण्यधान्यं कुनारिलाभं च ॥ ४ ॥
भानुस्त्रिकोणसंस्थो धनवन्तं मुख्यमतिनिपुणम् ।
भोक्तारं गुणवन्तं[2] शशी प्रसूतौ त्रिकोणगः पुरुषम् ॥ ५ ॥
वक्रोऽपि तस्करपतिं शूरं खलु निर्दयं चापि ।
सौम्यो विनोदशीलं जयिनं च स्वत्रिकोणगः कुरुते ॥ ६ ॥
जीवः पुनर्हितकरं महत्तरं नयविदं सुखोपेतम् ।
दानवपूज्यो जनयेद्ग्रामपुरवरिष्ठमाढ्यमतिसुभगम् ॥ ७ ॥
आत्मत्रिकोण आर्किः धनतृप्तं कुलयुतं शूरम् ।
तीक्ष्णमयूखः कुरुते महोग्रमत्युच्चकर्माणम् ॥ ८ ॥
धर्मरतं हिमरश्मिर्मनस्विनं रूपवन्तमात्मर्क्षे ।
आढ्यं प्रचण्डमचलं भौमः कुरुते स्वराशिगः पुरुषम्॥९॥
शशितनयोऽपि विधत्ते वल्गुकथं पण्डितं वाऽपि ।
काव्यश्रुतिज्ञमाढ्यं गुरुचेष्टं[3] वाक्पतिः स्वराशिस्थः ॥ १० ॥
दानवपूज्यः कुरुते कृषीवलं स्फीतवित्तं च ।
कुरुते शनैश्चरोऽपि च मान्यमदुःखं स्वराशिगः पुरुषम्॥११॥
मित्रगृहेऽर्कः ख्यातं स्थिरसौहृदमर्थदातारम् ।
मित्रर्क्षगः शशाङ्को यतस्ततो लब्धसौख्यबहुमानम् ॥ १२ ॥
अङ्गारकोऽपि कुरुते सुहृद्धनारक्षणासक्तम् ।
शशिजः सुहृद्गृहगतः करोति चातुर्यहास्यधनवन्तम् ॥१३॥

---

१ विद्वांसं भूपसत्कृतं प्रसवे. २ धनवन्तं. ३ शुभचेष्टं.

वचसामधिपः पूज्यं सतां च सुविशिष्टकर्माणम् ।
मित्रगृहे भृगुतनयः सुहृत्प्रियं [1]दयितवित्तमतिशूरम् ॥ १४ ॥
भास्करसूनुः कुरुते परान्नभोजिनमधर्मकर्मरतम् ।
नीचे सविता कुरुते प्रेष्यं बान्धवजनावधूतं च ॥ १५ ॥
हिमरश्मिरल्पपुण्यं रोगिणमपि दुर्भगं लोके ।
नीचस्थः क्षितितनयोऽनर्थव्यसनोपतप्तमतिनीचम् ॥ १६ ॥
कुरुते हिमकरपुत्रः क्षुद्रं स्वज्ञातिबन्धु[2]वैरं च ।
नीचे गुरुः प्रकुरुते मलिनं प्राप्तावमानमतिदीनम् ॥ १७ ॥
असुरदयितोऽस्वतन्त्रं प्रणष्टदारं विषमशीलम् ।
कोणो विपन्नशीलं विगर्हिताचारमर्थरहितं च ॥ १८ ॥
कुरुते शत्रुगृहेऽर्को निःस्वं विषयप्रपीडितं चापि ।
तुहिनमयूखः कुरुते हृद्रोगिणमरिगृहे नरं सततम् ॥ १९ ॥
[3]बन्धारिभङ्गभाजं दीनं विकलं च दुर्भगं भौमः ।
[4]अज्ञानमतिविहीनं बुधोऽरिभे नैकदुःखमतिदीनम् ॥ २० ॥
क्लीबं गुरुर्विधत्ते [5]नयहीनं धनविहीनं च ।
शुक्रोऽरिगृहे भृतकं कुतन्त्रमतिदुःखितं जनयेत् ॥ २१ ॥
भास्करसुतोऽपि कुरुते मलिनं व्याध्यादिशोकसन्तप्तम् ।
स्वेषूच्चभागेषु फलं समग्रं स्वक्षेत्रतुल्यं भवनांशकेषु ।
नीचारिभागेषु जघन्यमेव मध्यं फलं मित्रगृहांशकेषु ॥ २२ ॥
द्वावुच्चगौ जनयतो धनिनं कीर्त्यान्वितं सदा पुरुषम् ।
नगरारक्षकमाढ्यं चमूपतिं त्रयः प्रथितम् ॥ २३ ॥
[6]आढ्यं नृपात्तकीर्तिं चत्वारो राजधर्मसंयुक्तम् ।
ख्यातं नृपतीष्टतमं पञ्चानेकविधवृद्धकोशं च ॥ २४ ॥
षड् ग्रहाः स्वोच्चगाः कुर्युर्नृपतिं पुरुषं सदा ।
प्रदानमानसम्पन्नं बहुवाहनमण्डितम् ॥ २५ ॥
स्वोच्चं याताः सर्वे समुद्रपर्यन्तमेदिनीनाथम् ।
जनयन्ति चक्रवर्तिनमवनीशं जातकं चिन्त्यम् ॥ २६ ॥

---

१ दयितमिह सूतम्. २ बद्धवैरं च. ३ बन्ध्वरिभङ्गं भौमो विकलं वा दुर्भगं लोके. ४ आज्ञामात्र. ५ बधिरनरं. ६ आढ्यो. ७ सर्म. ८ गुण.

द्वाभ्यां त्रिकोणसंस्थाभ्यां कुटुम्बी कुलवर्द्धनः।
श्रेष्ठः प्रख्यातकीर्तिश्च ग्रहाभ्यां भुवि जायते ॥ २७ ॥
महाधनस्त्रिभिश्चैव गणग्रामाधिनायकः।
आढ्यो नृपाप्तसत्कारश्चतुर्भिर्लोकसंमतः ॥ २८ ॥
आरक्षकः प्रधानः सेनापुरनगरभूपकोशानाम्।
पञ्चग्रहैस्त्रिकोणे भवति कुटुम्बी सुबहुसौख्यः ॥ २९ ॥
विद्यादानधनौघैः समन्वितो भवति षड्भिरेव पुमान्।
राज्यं प्रशास्ति नियतं गोपालकुलेऽपि संजातः ॥ ३० ॥
स्वत्रिकोणगतैः सर्वैर्भवेज्जातो महीपतिः।
वसुस्त्रीबलसम्पन्नो विद्याशास्त्रविशारदः ॥ ३१ ॥
द्वौ स्वगृहस्थौ कुरुतः कुलाधिकं बन्धुपूजनं धन्यम्।
वंशकरमर्थसहितं स्थानयशोभिस्त्रयो विहगाः ॥ ३२ ॥
ख्यातं विशिष्टचेष्टं श्रेणीपुरनगरपंच चत्वारः।
पञ्चावनीश्वरसमं प्रभूतगोभूमियुवतिसम्पन्नम् ॥ ३३ ॥
षड्भिः प्रवृद्धशब्दं द्युतिकोशस्वजनवाजिमानाढ्यः।
भवति नृपवंशजातो नियतं पृथिवीपतिः स्वर्क्षे ॥ ३४ ॥
राजाधिनृपं स्वर्क्षे जनयन्ति जितारिपक्षमिह सप्त।
मित्राश्रयं सुवृत्तं द्वौ मित्रगृहसमाश्रितौ कुरुतः ॥ ३५ ॥
बान्धवसुहृदुपकर्ता त्रिभिर्विशिष्टो भवेद्गुणैः ख्यातः।
ब्राह्मणदेवाराधनपरश्चतुर्भिर्धुरन्धरः ख्यातः ॥ ३६ ॥
राजोपसेवकः स्यात्पञ्चभिराढ्यो[1] नरेश्वरः कर्ता।
विस्तीर्णभोगवाहनवसुमान् षड्भिर्नरेन्द्रतुल्यः स्यात् ॥ ३७ ॥
सर्वैर्मित्रर्क्षगतैर्बहुवाहनभृत्यसाधनो राजा।
द्वाभ्यां नीचे नीचश्चिन्ताबहुग्रहसमेतः ॥ ३८ ॥
मूर्खोऽधर्मरतोऽस्वः[2] त्रिभिर्ग्रहैरध्वगो[3] नरः प्रेष्यः।
आलस्यनष्टचेष्टश्चतुर्भिरिह नीचगैर्मृतकः ॥ ३९ ॥
अगृहः[4] प्रभिन्नदारः पञ्चभिरिह कथ्यते नरो दासः।
खासभयश्रमततः[5] षड्भिर्नीचो भवेत् क्षामः ॥ ४० ॥

---
१ राज्यं. २ धर्माभिरतः. ३ नीचगैरध्वगः. ४ अनृतः. ५ घात.

भिक्षुस्त्यक्ताशितभुक् भवति पुमान् विगतसर्वस्वः ।
नीचैः सप्तभिरखिलैर्दिक् चिरविधृताम्बरः सूतः ॥ ४१ ॥
द्वावरिभवनसमेतौ क्लेशवतां नित्यविग्रहरुचीनाम् ।
अतिपरिभूतानामपि नृणां जन्मप्रदौ कथितौ ॥ ४२ ॥
विविधव्ययदुःखभुजां त्रयः श्रमोत्पन्ननष्टवित्तानाम् ।
चत्वार इष्टयोषित्पुत्रार्थविनाशजा[1]धितप्तानाम् ॥ ४३ ॥
पञ्चारिगृहे विहगा इष्टव्यसनाभिघाततप्तानाम् ।
षड्रो[2]गाङ्कितवपुषां दुःखवतां चैव जन्मकराः ॥ ४४ ॥
सप्तारिभे ग्रहेन्द्रा बीभत्सकुले प्रसूतानाम् ।
[3]शय्याच्छादनभोजनै[4]र्वञ्चितकानां भवन्ति सदा ॥ ४५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां उच्चादिचिन्तनं नाम
चतुश्चत्वारिंशोऽध्यायः ॥

## पञ्चचत्वारिंशोऽध्यायः ।

स्त्रीणां जन्मफलं तुल्यं पुंभिः सार्धं यदुच्यते ।
विशेषस्तत्र यो दृष्टः कथ्यते विस्तरेण सः ॥ १ ॥
वैधव्यं निधने चिन्त्यं शरीरं जन्मलग्नतः ।
सप्तमे पतिसौभाग्यं पञ्चमे प्रसवस्तथा ॥ २ ॥
प्रकृतिस्था लग्नेन्द्वोः समभे सच्छीलरूपाढ्या ।
भूषणगुणैरुपेता शुभवीक्षितयोश्च युवतिः स्यात् ॥ ३ ॥
पुरुषाकृतिशीलयुता दुःशीला दुःखिता विषमराशौ ।
क्रूरैर्वीक्षितयुतयोः पापा स्त्री स्याद्गुणैर्हीना ॥ ४ ॥
लग्नेन्द्वोर्यो बलवान् त्रिंशांशेऽधिष्ठितोऽधिपैः फलं क्रमशः ।
भूसुतभार्गवबोधनसुरगुरुमार्तण्डदेहभवैः ॥ ५ ॥
कन्यैव स्वगृहे दुष्टा भौ[5]मत्रिंशांशके भवेत् ।
कुचरित्रा तथा शौक्रे समाया बोधनेऽबला ॥ ६ ॥
[6]जीवे साध्वी न[7]टी दासी [8]मान्दे स्यात्कपटी मता ।

१ रोग. २ गपीडितानां. ३ अल्पा. ४ वाञ्छि. ५ भाक्. ६ जैवे. ७ यमे. ८ बुधर्क्षे कौतुकापटी.

शौक्रे प्रकीर्णकामा च बौधे गुणवती भवेत् ॥ ७ ॥
जैवे सती शनौ क्लीबा दुष्टा कौजे सितर्क्षगे ।
शौक्रे ख्यातगुणा बौधे कलासु निपुणा मता ॥ ८ ॥
जैवे गुणान्विता मन्दे पुनर्भूश्चन्द्रभे ततः ।
स्वच्छन्दा कथिता कौजे शौक्रे च कुलपांसना ॥ ९ ॥
बौधे शिल्पान्विता नारी जैवे बहुगुणा स्मृता ।
पतिघ्नी चार्कभे कौजे वाचाला भार्गवे सती[1] ॥ १० ॥
बौधे पुंश्चेष्टिता जैवे राज्ञी मन्दे कुलच्युता ।
कौजे बहुगुणार्यर्क्षे शौक्रे वाग्व्यसनी तथा ॥ ११ ॥
बौधे विज्ञानसंयुक्ता जैवे नैकगुणा स्मृता ।
मन्दे चाल्परतिः प्रोक्ता दासी कौजे तथार्किभे ॥ १२ ॥
सुप्रज्ञा च भवेच्छौक्रे बुधे दुःस्था खला तथा ।
जैवे पतिव्रता नित्यं मन्दे नीचानुसेविनी ॥ १३ ॥
शुक्रासितौ यदि परस्परभागसंस्थौ
शौक्रे च दृष्टिपथगावुदये घटांशे ।
स्त्रीणामतीव मदनाग्निमदः[2] प्रवृद्धः[3]
स्त्रीभिः शमं[4] च पुरुषाकृतिभिर्लभन्ते[5] ॥ १४ ॥
शून्येऽस्ते कापुरुषो बलहीनः सौम्यदर्शनविहीने ।
चरभे प्रवासशीलो भर्ता क्लीबो ज्ञमन्दयोश्च भवेत् ॥ १५ ॥
उत्सृष्टा सूर्येऽस्ते कुजे च विधवा नवोढैव ।
कन्यैवाशुभदृष्टे शनैश्चरे वृद्धतां याति ॥ १६ ॥
अशुभे क्षीणेऽस्तगते त्यक्ता पत्या भवेदशुभदृष्टे ।
क्रूरैर्विधवास्तगतैर्भवति पुनर्भूस्तथा मिश्रैः ॥ १७ ॥
अन्योन्यभागगतयोः सितकुजयोरन्यपुरुषसक्ता स्यात् ।
द्यूने शिशिरगुतनये[6] स्याद्युवतिरनुज्ञया भर्तुः ॥ १८ ॥
सौरारगृहे तद्वत् शशिनि सशुक्रे विलग्नगे जाता ।
मात्रा साकं कुलटा क्रूरग्रहवीक्षिते भवति ॥ १९ ॥

---

१ चाप्यसती. २ वह्निगदः. ३ वृद्धिः. ४ समं. ५ र्यभेत. ६ करे वा.

द्यूने तु कुजनवांशे शशिना दृष्टे सरोगयोनिः स्त्री ।
सद्गुरुभागे चारुश्रोणी पतिवल्लभा भवति ॥ २० ॥
द्यूने वृद्धो मूर्खः सौरगृहे स्यान्नवांशके नाथः ।
स्त्रीलोलः क्रोधपरः कुजभेऽथ नवांशके भर्ता ॥ २१ ॥
शुक्रगृहेऽथ नवांशेऽतिरूपसौभाग्यसंयुतो भर्ता ।
नैपुणविज्ञानयुतस्तथैव बौधेऽथवा नवांशे वा ॥ २२ ॥
मदनार्तो मृदुचित्तः शशिभे नवमेंशकेऽथवा भर्ता ।
गुरुसितभागेऽप्यथवा गुणवान्विजितेन्द्रियो भवति ॥२३॥
अतिकर्मकृदतितीक्ष्णो रविभेऽप्यथवांशके भवति भर्ता ।
सप्तमभवनोपेतैर्नित्यं स्त्रीणां समवधार्यम् ॥ २४ ॥
ईर्ष्यान्विता सुखपरा लग्ने सितचन्द्रयोर्बुधेन्द्वोश्च ।
सुखिता कलासु कुशला गुणशतसहिता विनीता स्यात्॥२५॥
शुक्रबुधयोर्विलग्ने रुचिरा सुभगा कलासु निपुणा च ।
दास्यम्बरसौख्ययुता शुभेषु पापेषु विपरीता ॥ २६ ॥
पापेऽष्टमे तु विधवा निधनाधिपतिर्नवांशके यस्य ।
तस्य दशायां मरणं वाच्यं तस्याः शुभैर्द्वितीयस्थैः ॥२७॥
कन्यालिवृषभसिंहे शिशिरमयूखेऽल्पपुत्रा स्यात् ।
पुत्रभवने शुभयुते निरीक्षिते वा तथैव स्यात् ॥ २८ ॥
रिक्तै[3] बुधेन्दुभृगुजै रविजे च मध्ये
शेषैर्बलेन सहितैर्विषमर्क्षलग्ने ।
जाता भवेत्पुरुषिणी युवती सदैव
पुंश्चेष्टिता विचरति प्रथिता च लोके ॥ २९ ॥
क्रूरे जामित्रगते नवमे यदि खेचरो भवति नूनम् ।
आप्नोति प्रव्रज्यां पापग्रहसम्भवामबला ॥ ३० ॥
बलिभिर्बुधगुरुशुक्रैः शशाङ्कसहितैर्विलग्नगैः समभे ।
स्त्री ब्रह्मवादिनी स्यादनेकशास्त्रार्थकुशला च ॥ ३१ ॥

---

१ यैः. २ पुत्रता तस्याः. ३ रिक्तैर्बु.

जन्मकाले विवाहे च चिन्तायां वरणे तथा ।
चिन्त्यं स्त्रीणां तु यत्प्रोक्तं घटते तत्पतिष्वपि ॥ ३२ ॥

इति कल्याणवर्मविरचितायां सारावल्यां स्त्रीजातकफलो
नाम पञ्चचत्वारिंशोऽध्यायः ॥

## षट्चत्वारिंशोऽध्यायः ।

शिखिजलशस्त्रज्वरजस्त्वामयतृट्क्षुत्कृतो भवेन्मृत्युः ।
सूर्यादिभिर्निधनगैः परदेशपथिस्वके चराद्यैश्च ॥ १ ॥
यो बलयुक्तो निधनं पश्यति तद्धातुकोपजो मृत्युः ।
तत्संयुक्तस्तनुजो बहुभिर्बलिभिर्बहुप्रकारः स्यात् ॥ २ ॥
सूर्याङ्गारकयोः खबन्धुगतयोः शैलाग्रपातोद्भवो
मृत्युर्भूतनयेन्दुभानुतनयैः कूपे खसप्ताम्बुगैः ।
पापालोकितयोर्हिमोष्णकरयोः कन्यास्थयोर्बन्धतो
लग्ने सूर्यशशाङ्कयोस्तिमियुगे तोये सदा[1] मज्जतः[2] ॥ ३ ॥
कर्किणि मन्दे मकरे चन्द्रे मृत्युर्दरोदरकृतः स्यात् ।
पापांश[3]स्थे चन्द्रे कुजभवने शस्त्रवह्निभवः ॥ ४ ॥
कन्यायां पद्मिनीशत्रुः पापमध्यगतः सदा[4] ।
रक्तोत्थशोषजं मृत्युं करोति ध्रुवमेव हि ॥ ५ ॥
सौरर्क्षे शुभयोर्मध्ये शशी रज्ज्वग्निपातजम्[5] ।
कुर्यान्मृत्युं न सन्देहश्चाणक्यवचनं तथा ॥ ६ ॥
नवमसुतयोरशुभयोः पापग्रहदृष्टयोर्भवेन्मृत्युः ।
द्रेक्काणैः पाशभुजगनिगलैश्छिद्रेऽथवा गुह्याम् ॥ ७ ॥
मीनोदये दिनकरे चन्द्रे पापान्वितेऽस्तगे मेषे ।
स्त्रीहेतुकं हि मरणं स्वमन्दिरे स्याद्वदन्त्येके ॥ ८ ॥
रुधिरे सुखे[6]ऽथवार्के वियति यमे क्षीणचन्द्रसंयुक्तैः[7] ।
पापैस्त्रिकोणलग्ने शूलप्रोतस्य निर्दिशेन्मरणम् ॥ ९ ॥

---

१ यदा. २ मज्जति. ३ पापान्त. ४ स्तदा. ५ रज्ज्वग्न्युत्पातजं शशी. ६ सुते. ७ युक्ते.

हिबुकेऽर्के वियति कुजे क्षीणेन्दुयुतेऽर्कजेन संदृष्टे ।
काष्ठेनाभिहतः सन्म्रियते जातो न सन्देहः ॥ १० ॥

क्षीणेन्दुभौमरविचन्द्रजसूर्यपुत्रैः
छिद्रास्पदोदयसुखैर्लगुडाहतस्य ।
मृत्युर्वियन्नवमलग्नसुतस्थितैस्तै-
र्धूमाग्निबन्धनशरीरनिकुट्टनैः स्यात् ॥ ११ ॥

हिबुकास्तकर्मसहितैः कुजभानुशनैश्चरैर्भवति मृत्युः ।
आयुधहुतभुग्भूपतिकोपप्रभवः सदा पुंसाम् ॥ १२ ॥
कर्माम्बुवित्तसंस्थैः कुजेन्दुमन्दैः क्षतः क्रिमिकृतोऽन्तः ।
खस्थेऽर्केन्दुकुजे वा सुराप्रपानैप्रतापकृतः ॥ १३ ॥
सप्तमभवने भौमे क्षीणेन्दुदिवाकरार्किभिर्लग्ने ।
मरणं जातस्य वदेद्यन्त्रोत्पीडनभवमवश्यम् ॥ १४ ॥
तुलायां रुधिरे याते कुजर्क्षे भास्करे स्थिते ।
चन्द्रे मन्दगृहं प्राप्ते विण्मध्ये मरणं भवेत् ॥ १५ ॥
गलितेन्द्वर्कभूपुत्रैर्गतैर्व्योमाष्टबन्धुषु ।
विण्मध्ये तु भवेन्मृत्युः सिद्धसेनः प्रभाषते ॥ १६ ॥
बलिना कुजेन दृष्टे क्षीणेन्दौ रन्ध्रगेऽर्कजे मृत्युः ।
गुल्ममहावेदनया क्रिमिदाहायुधकृतो भवति ॥ १७ ॥
रवौ सरुधिरे द्यूने निधने रविसंभवे ।
रसातलस्थे हिमगौ मृत्युः पक्षिकृतो भवेत् ॥ १८ ॥
लग्नछिद्रत्रिकोणेषु रव्यारार्किनिशाकरैः ।
मृत्युः स्याच्छैलपातेन शस्त्रकुड्यादिपाशजः ॥ १९ ॥
उदयनवांशाधिपतेः समानभूमौ वदन्ति यवनेन्द्राः ।
ग्रहयोगेक्षणकाद्यैः परिकल्प्यं चान्यदपि तज्ज्ञैः ॥ २० ॥
उदितांशसमो मोहः शेषेण निरीक्षिते द्विगुणितः स्यात् ।
त्रिगुणः शुभैश्च दृष्टे समस्तमुनयो व्यवस्यन्ति ॥ २१ ॥

---

१ सायुध. २ प्रपात. ३ व्योमाष्टनवबन्धुषु, व्योमास्तबन्धुषु. ४ मित्र. ५ वक्र.
६ स्वेशेन.

उदयाद्द्वाविंशतिमद्रेक्काणो भवति कारणं मृत्योः ।
तस्याधिपतिभवो[1] वा निर्याणं सूचयेत्स्वगुणैः ॥ २२ ॥
मेषाद्ये द्रेक्काणे क्रूरग्रहवीक्षिते च संयुक्ते ।
अम्ब्वहिविषपित्तकृतं मरणं नृणां समादेश्यम् ॥ २३ ॥
विद्याद्द्वितीयभागे मरणं जलकृमिहिमारण्यैः ।
एवं तृतीयभागे तटाककूपप्रपाताद्वा ॥ २४ ॥
करभाश्वखरोष्ट्रेभ्यो मृत्युर्ज्ञेयो वृषस्याद्ये ।
पित्ताग्निवातचोराद्द्वितीयभागे वृषस्यैव ॥ २५ ॥
विद्यात्तृतीयभागे यानासनवाजिपातकृतम् ।
पुंसां भवति हि मरणं रणशिरसि महास्त्रकृतमेव ॥ २६ ॥
आद्ये मिथुनत्र्यंशे कासश्वासोद्भवो भवति ।
मृत्युर्महिषविषाद्याद्द्वितीयभागे[2] च संनिपाताद्वा ॥ २७ ॥
वनवासिचतुश्चरणात्पर्वतनागाद्[3]रणात्तथारण्यात्[4] ।
भवति हि मृत्युः पुंसामन्ते[5] भागे तु जुतुमस्य ॥ २८ ॥
ग्राहेण मद्यपानात् कण्टकदोषेण वा तथा स्वप्नात् ।
भवति हि कर्कटकाद्ये मृत्युर्नृणां तृतीयभागे तु ॥ २९ ॥
अभिघाताद्[6]विषपानान्मध्ये त्र्यंशे भयं समादिष्टम् ।
विहग[7]प्रमेहगुल्मासृक्तन्द्रीदोषेण[8] च तथान्त्ये ॥ ३० ॥
सलिलविषपादरोगार्तिसिहाद्ये त्र्यंशके भवेत्पुंसाम्[9] ।
मध्ये तृतीयभागे जलामयकृतो वनोद्देशे ॥ ३१ ॥
विषशस्त्रयोगदोषैरभिशापाद्वा तथा च पाताद्वा ।
अन्त्ये सिंहत्र्यंशे भवति हि मृत्युर्न सन्देहः ॥ ३२ ॥
आद्ये कन्यात्र्यंशे मस्तकरोगात्तथानिलान्मृत्युः[10][11] ।
व्यालगिरिदुर्गवनजो[12] मध्ये भूपात्मजादथवा ॥ ३३ ॥
करभखरशस्त्रतोयादतिखातात् स्त्रीकृतान्नपानाद्वा ।
अन्त्ये कन्यात्र्यंशे नृणां मृत्युः सदा दृष्टः ॥ ३४ ॥

१ अधिपोद्भवो. २ मृत्युर्विषत्रकमहिषा. ३ पतनाद्गजा. ४ रण्यैः. ५ मन्त्ये. ६ अभिशापा. ७ प्लीह. ८ लमस्त्रंसनदोषेण च तथान्त्ये. ९ श्वसन. १० न्मृत्युः. ११ ऽनलात्. १२ वनदुर्गवक्षो.

आद्ये वणिक्त्रिभागे युवतिचतुष्पान्निपातदोषेण ।
मध्ये तु जठररोगैरन्त्ये व्यालाम्बुजातेभ्यः ॥ ३५ ॥

आद्येऽलिनस्त्रिभागे विषशस्त्रस्त्रीकृतान्नपानभवः ।
मध्ये तु वस्त्रभारस्त्रंसनरोगैर्भवति मृत्युः ॥ ३६ ॥

अन्त्ये तृतीयभागे लोष्टकपाषाणजनितवेदनया ।
भवति हि मरणं ह्यथवा नृणां जङ्घास्तिभङ्गकृतम् ॥ ३७ ॥

चापस्याद्ये त्र्यंशे गुदानिलसमुद्भवैर्विविधरोगैः ।
मध्ये विषगुरुदोषैरनिलकृतैर्वा भवेन्मृत्युः ॥ ३८ ॥

अन्त्ये तृतीयभागे जलमध्ये तत्समुत्थितैर्वाऽपि ।
मृत्युर्नृणां दृष्टो जठरामयदोषसंभूतः ॥ ३९ ॥

मकराद्ये द्रेक्काणे नृपहिंसाव्याघ्रकारणान्मृत्युः ।
ऊरुविनाशादथवा जलचरसत्वाद्विषैकशफसर्पात् ॥ ४० ॥

दहनास्त्रतस्करेभ्यो ज्वरादमानुषविभेदनान्मध्ये ।
अन्त्ये मकरत्र्यंशे स्त्रीणां मृत्युः सदा दृष्टः ॥ ४१ ॥

कुम्भे प्रथमत्र्यंशे स्त्रीभ्यस्तोयैस्तथा जठररोगैः ।
ज्ञेयो मृत्युर्नृणां पर्वतगहनद्विपादैर्वा ॥ ४२ ॥

मध्ये स्त्रीकृतदुःखैर्गुह्यजरोगैर्भवति मृत्युः ।
अन्त्ये मिथुनचतुष्पदमुखरोगकृतैर्भवेत्पुंसाम् ॥ ४३ ॥

अंशे मीनयुगाद्ये गुल्मग्रहणीप्रमेहयुवतीभ्यः ।
जङ्घार्जलजै रोगैर्गजग्रहकृतैः समादिशेन्मृत्युम् ॥ ४४ ॥

नौभेदाज्जलमध्ये झषे दृगाणद्वितीयजातानाम् ।
अन्त्ये भवति हि मरणं कुत्सितरोगैर्न सन्देहः ॥ ४५ ॥

इति कल्याणवर्मविरचितायां सारावल्यां निर्याणफलं नाम
षट्चत्वारिंशोऽध्यायः ॥

१ चतुष्पदनिपात. २ रसा. ३ घातेन. ४. जठरज.

## सप्तचत्वारिंशोऽध्यायः ।

जन्मविधावज्ञाते प्रश्नो[1]त्थविकल्पतो भवेत्प्रष्टुः ।
जन्मसमये[2] नराणामतः प्रयत्नेन संचिन्त्यम्[3] ॥ १ ॥

दशविध[4]चिन्हैर्ज्ञात्वा जातं पुरुषं प्रसाधयेल्लग्नम् ।
अत एव प्रथमतरं तानि समस्तान्यहं वक्ष्ये ॥ २ ॥

मेषविलग्ने जातः प्रचण्डरोषो विदेशगमनरतः ।
लुब्धः कृशोऽल्पसौख्यः सेर्ष्यः स्खलिताभिधायी च ॥ ३ ॥

पित्ता[5]निलोष्ठरोगैरभितप्ततनुः क्रियापटुर्भीरुः ।
मेषर्क्षे धर्मपरः चलोऽल्पमेधाः परार्थनाशङ्करः[6] ॥ ४ ॥

भोक्ता ख्यातः कुनखो भ्रातृविहीनस्तथा पितृत्यक्तः ।
शीघ्रगतिर्मन्दसुतो विविधार्थयुतः सुशीलश्च ॥ ५ ॥

कुकुलोद्गतां सुशीलां[7] स्वजनेऽपि[8] च निर्घृणां स्त्रियं लभते ।
अपकृष्टोदयसौख्यः कुधर्मसंवर्धितार्थश्च ॥ ६ ॥

वृषभविलग्ने शूरः क्लेशसहिष्णुः सुखी रिपुनिहन्ता ।
बाल्ये सञ्चययुक्तः पृथुपीनललाटघोणगण्डोष्ठः ॥ ७ ॥

उद्युक्तकर्मसुभगः पितुर्जनन्याः सुशर्मकृद्दाता ।
विविधव्ययोऽतिरौद्रः कफानिलात्मा पिता कुमारीणाम् ॥८॥

स्वजनावमर्दनपरो धर्मनिर्वृत्तो[9]ऽबलाप्रियश्चपलः ।
भोजनपाननिगृध्नुर्नानाम्बरभूषणैकमतिः ॥ ९ ॥

मिथुनविलग्ने जातः प्रियदारो भूषणप्रदानरतिः ।
पूज्य[10]वचः सुवचस्वी द्विमातृको रिपुविनीतः स्यात् ॥१०॥

गान्धर्वशिल्पकुशलः श्रुतिशास्त्रार्थप्रहास्य[11]काव्यमतिः ।
सौम्योऽथ मण्डनरुचिर्मदवश्यः स्यात्सतां सत्यः ॥ ११ ॥

असहिष्णुरनिष्टसुतः शठोऽल्पबन्धुश्च संस्थितो भवति ।
हीनाधिकाङ्गपादो विनीतवृत्ताक्षिपक्ष्मा च ॥ १२ ॥

---

१ श्नोऽथ. २ समयो. ३ संचिन्त्यः. ४ विधि. ५ पित्तानिलोष्ण. ६ रतः.
७ विशीलां. ८ व्यङ्गां स्वजनेऽघृणां. ९ नियुक्तो. १० पूज्यतमः. ११ भास्य.

चण्डाकारो वश्यो दारुणरिपुपक्षसंहरणशीलः ।
भूरत्नकाञ्चनोर्मिकजलार्थभागी भवेत्पुरुषः ॥ १३ ॥
कर्किणि लग्ने भीरुर्नैकनिवासश्चलप्रज्ञः ।
मेधान्वितोऽतिधुर्यो गुह्यरुगार्त्तो निहन्ति रिपून् ॥ १४ ॥
अन्तर्विषमः कामी द्विजदेवात्यर्चनप्रदानरतः ।
धर्मरतः कफबहुलो युवतितनुसंस्थितो गुणैर्नियुतम् ॥१५॥
कन्यानुजो न बन्धुर्दृष्टाल्पसुतो विगर्हितकुटुम्बः ।
बहुमतकुत्सितयुवतिः परार्थभागी दृढग्राही ॥ १६ ॥
परदेशगः सुधीरः साहसकर्मा जलाधिगतवित्तः ।
स्त्रीभूषणाम्बरसुखैर्भोगैश्च समन्वितो भवति ॥ १७ ॥
सिंहोदये प्रसूतो मांसरुचिर्नृपतिलब्धमानधनः ।
धर्माच्च्युतोऽप्यसंस्थः कुटुम्बकार्येषु रतवामः ॥ १८ ॥
सिंहस्य समानमुखः स्थितिमान्गाम्भीर्यसत्वसंयुक्तः ।
धृष्टोऽल्पवचा लुब्धः परघातकरो बुभुक्षावान् ॥ १९ ॥
पर्वतवनानुसारी सुरोषणो दृढसुहृत्प्रमादी च ।
दुष्प्रसहो हतशत्रुः ख्यातसुतः प्रणतसाधुजनः ॥ २० ॥
कृष्यादिकर्मधनवान् व्यापाररतो बहुव्ययो भवति ।
वेश्या नटी नियमनाद्भार्यातश्चातिदन्तरोगाच्च ॥ २१ ॥
षष्ठे साधुत्वयुतः शिक्षागान्धर्वकाव्यशिल्पपटुः ।
प्रियवल्गुकथाभाषी प्रणयी दानोपचाररतः ॥ २२ ॥
कन्याविलाससत्वस्थितिर्दयावान्परस्वभोक्ता च ।
भोक्ता देशभ्रमणः स्त्रीप्रकृतिर्विनयवाक् कितवः ॥ २३ ॥
भूमण्डलवर्धनभाक् सुभगः कामी यशोच्छ्रयं लभते ।
ऋजुधर्मवान् सुरूपः सुरुचिः कान्तो गुरूणां च ॥ २४ ॥
पापैरहार्यवृत्तैः सहजैश्च समं विरुद्धश्च ।
कन्याप्रजोऽनिलकफो नीचारिविवर्जितकथश्च ॥ २५ ॥
सप्तमलग्ने जातो विषमाङ्गः शीलवर्जितश्चपलः ।

---

१ नेप्सित. २ तनुः संस्तुतो गणैर्नियतम्. ३. ह्यसंस्थ.

उपचितहीनद्रविणः सुखंहृद्देहानुसारी स्यात् ॥ २६ ॥
कफवातिककलिरुचिको दीर्घमुखशरीरधर्ममतिवेत्ता ।
बहुदुःखभाक् सुमेधाः परावमर्दी सुचारुकृष्णाक्षः ॥ २७ ॥
अतिथिद्विजदेवरतिः क्रतुक्रियावान् गुरुषु भक्तः ।
पूज्यः पितान्यभाजां जातः सत्यश्च मृदुशुक्रः ॥ २८ ॥
भ्रातृप्रियोऽर्थमुख्यः शुचिश्च पापोपचारबन्धुश्च ।
कान्तः कुत्सितवृत्तो धर्मव्यवसायनीचमतिः ॥ २९ ॥
वृश्चिकलग्ने पुरुषः पीनपृथुव्यायताङ्गतीक्ष्णश्च ।
अन्तर्विषमः शूरो मातुरभीष्टो रतो यतस्त्यागी ॥ ३० ॥
गम्भीरपिङ्गलोद्धतदृक् सुमहाहृन्निमग्नजठरश्च ।
अन्तर्विलग्नघोणः साहसनिरतः स्थिरश्चण्डः ॥ ३१ ॥
विश्वासहासवश्यः पित्तरुगार्तः कुटुम्बसम्पन्नः ।
गुरुसुहृदां द्रोहरतः पराङ्गनाकर्षणानुरतः ॥ ३२ ॥
बन्धोद्व्रणवक्रः स्याद्भूपतिसेवी सशत्रुपक्षः स्यात् ।
प्रयतोऽर्थदः सुयुवतिर्धर्मं प्रति वत्सलः क्षुद्रः ॥ ३३ ॥
कार्मुकलग्ने जातः स्थूलरदस्तुङ्गपृथुलमूर्धा च ।
प्रणतानां प्रियकारी धृतिसत्वसमन्वितः सुनयः ॥ ३४ ॥
मलिनासिकोष्ठकुनखी ह्रीमानतिपीवरोरुजठरश्च ।
विज्ञानशास्त्रकुशलः प्रत्यग्रमतिः प्रकोपश्च ॥ ३५ ॥
बलिनाममर्षणपरः कुलमुख्यो नाशितारिपक्षश्च ।
संग्रामपदश्रेष्ठश्छलबहुलच्छिद्रबन्धुगुणः ॥ ३६ ॥
शिल्पादिकर्मनिरतः स्वकर्मवाग्बन्धुवर्गशुभदश्च ।
कान्तो वदनांजिपदो नृपाद्धृतार्थः सुधर्मरतः ॥ ३७ ॥
मृगवदने लग्नस्थे कृशगात्रो भीरुरेणवक्रश्च ।
वातव्याधिभिरार्तः प्रदीप्ततुङ्गोग्रनासः स्यात् ॥ ३८ ॥
लघुसत्वोऽमिततनयो रोमचितः पाणिपादविस्तीर्णः ।

---

१ सुखकृद्देहा. २ कारी. ३ कक्षाधिकः खलरुचिः. ४ तनुः. ५ दाता. ६ तनुर्व्या. ७ रणोद्य. ८ वरा. ९ वाग्बन्धु. १० वदनाक्षिगदो.

आचारगुणैर्हीनस्तृषार्त्तरामाभिराममतिः ॥ ३९ ॥
गिरिवनचारी शूरः शास्त्रश्रुतिशिल्पगेयवाद्यज्ञः ।
क्षुद्रबलः सकुटुम्बो द्विष्टो दुष्टश्च बन्धुशठः ॥ ४० ॥
कुत्सितशीलः कान्तः कुत्सितदारोऽनसूयको धनवान् ।
धर्मरतो नृपसेवी न चातिदाता सुखी सुभगः ॥ ४१ ॥
कुम्भविलग्ने पुरुषः सुनीचकर्मा कुलाधिको मूर्खः ।
स्फुटिताग्रनसो नीचः सक्रोधपरोऽलसात्मा च ॥ ४२ ॥
वैरप्रियोऽप्रहृष्टः पारुष्यद्यूतनीचदासीष्टः ।
उपहृतबन्धुः क्षुक्षः[1] क्षयोदयी प्राप्तवित्तश्च ॥ ४३ ॥
पिशुनः शठो दरिद्रो विनष्टबन्धुर्बहिष्कृतो लोके ।
नो संमतः परेषां प्रकृष्टसम्पद्गुरुरतिश्च ॥ ४४ ॥
कुम्भोदयो न शस्तो लग्नविधौ सर्वथैव सत्यमते ।
यवनैर्वर्गोऽपि तथा चाणिक्यो वदति नो वर्गम् ॥ ४५ ॥
मीनविलग्ने जातो धन्यः स्फुटनासिकोऽस्फुटाक्षश्च ।
विज्ञानकाव्यबुद्धिर्मानादरलब्धकीर्तिश्च ॥ ४६ ॥
विवृतोष्ठरदः कुष्ठी विदारितास्यो वृषादि संलुब्धः ।
दाक्षिण्यप्रत्ययवान् मेषच्छागादिसम्पन्नः ॥ ४७ ॥
शौचाचारश्रुतिवाग्धृतिमान् कन्याप्रजो विनीतश्च ।
सौम्यमतिः सत्वयुतो गान्धर्वस्त्रीरतिज्ञश्च ॥ ४८ ॥
बहुशीलोदारमतिर्भ्रातृधनोऽमर्षणः सुबन्धुश्च ।
बलवति राशावेतत्तदधिपतौ वा बलं सर्वम् ॥ ४९ ॥

इति कल्याणवर्मविरचितायां सारावल्यां नष्टजातकाध्याये लग्नगुणो नाम सप्तचत्वारिंशोऽध्यायः ॥

## अष्टचत्वारिंशोऽध्यायः ।

रिक्तोत्कटदृक् क्रूरो धनपः शुक्लाधिकोऽग्रदाररतः ।
पीनोन्नतः प्रचण्डस्तस्करनाथः क्रियादिहोरायाम् ॥ १ ॥

१ श्रुत. २ वक्ष.

चोरः प्रमादबहुलः खराग्रपादाङ्गुलिर्द्वितीयायाम्।
स्निग्धायताक्षचतुरः पृथुपीनतनुः सुमेधाश्च ॥ २ ॥
श्यामो विशालचक्षुर्ललाटपक्षा[1]ः प्रगल्भरतिवश्यः।
स्थूलास्थितनुर्वृषभप्रथमार्धे स्याद्वपुष्मांश्च ॥ ३ ॥
पृथ्वायतवृत्ततनुमुदारसत्वं सुमूर्द्धजं जनयेत्।
व्यस्तकटिं वृषभाक्षं वृषभे होराद्वितीयायाम् ॥ ४ ॥
मध्यायतोऽतिदक्षो मध्यतनुर्मृदुशिरोरुहांघ्रिश्च।
मिथुनाद्यर्धे शूरः सुरतेप्सुः स्याद्धनी प्राज्ञः ॥ ५ ॥
मधुरायताक्षकामी शूरो मृदुकर्मठो वचस्वी च।
परदारदत्तदेहो भवेन्नृमिथुनद्वितीयहोरायाम् ॥ ६ ॥
उद्धतमूर्तिः सुशिराः प्रगल्भधीर्मन्ददृक् चलाङ्गशठः।
श्यामतनुः सुकृतज्ञो भग्नाग्ररदः कुलीरहोरायाम् ॥ ७ ॥
द्यूते रतोऽध्वनिरतः पृथुवक्षाः सत्प्रमाणसम्पन्नः।
कठिनशरीरः क्रोधी जायेत कुलीरभद्वितीयायाम् ॥ ८ ॥
रक्तान्तदृक् प्रगल्भो गुरुरायतविग्रहश्च सिंहाद्ये।
जिह्मस्वभावसुखभागन्तस्थिरकार्यसत्वश्च ॥ ९ ॥
स्त्रीमृष्टपानभोजनवस्त्रेप्सुर्बहुविचेष्टकठिनाङ्गः।
दाताध्वरतोऽल्पसुतो भोगी स्थिरसौहृदोऽन्त्यार्धे ॥ १० ॥
सुकुमारमूर्तिकान्तः सुवाक्यगीताङ्गनारतिर्मधुरः।
गान्धर्वविद्युवत्याः सुभगः पूर्वार्धजः श्रेष्ठः ॥ ११ ॥
ह्रस्वो हठश्रुतार्थः स्थूलशिराः सम्मतो विवादी च।
सेवालेख्यलिपिज्ञः क्षयवृद्धियुतः सुखी द्वितीयार्धे ॥ १२ ॥
वृत्तानन उच्चनसस्त्वसितायतसुनयनो विलासी स्यात्।
पीनायतोऽस्थिसारो धनवान् स्वजनप्रियस्तुलाद्यर्धे ॥ १३ ॥
बह्वर्थभाक् स्थिरार्धः श्यामाकुञ्चितशिरोरुहश्च शठः।
वृत्ताक्षस्त्वपरार्धे सुत्वग्घीनाग्रपादश्च ॥ १४ ॥
रक्तान्तपिङ्गदृष्टिः साहसकर्मान्वितो रणे शूरः।

[1] वक्ष.

दुष्टस्वभावरामाप्रियोऽर्थभाग्वृश्चिकाद्यर्धे ॥ १५ ॥
विस्तीर्णोपचितायतपीनाङ्गः क्ष्माधिपोपसेवी स्यात् ।
बहुगुणमित्रसमेतः स्फुटिताक्षो वृश्चिकापरार्धे स्यात् ॥१६॥
दारितपृथुमुखवक्षाः परिकुञ्चितनेत्रगण्डः स्यात् ।
बाल्ये त्यक्तात्मगुरुश्चापाद्यर्धे तपस्वी च ॥ १७ ॥
पद्माक्षो दीर्घमहाबाहुः शास्त्रार्थवित्सुमूर्तिः स्यात् ।
वाक्सुभगो धन्योऽपि च धनुरपरे निर्वृतो यशस्वी च ॥१८॥
श्यामो मृगाक्षधन्यः स्त्रीष्वजितः सौम्यमूर्तिशठ आढ्यः ।
मृष्टाशनः सुचेष्टो[1] मृगाद्यभागे तनूच्चघोणः स्यात् ॥ १९ ॥
रक्तान्तदृष्टिरलसो गुरुदीर्घाटनपरो भवति मूर्खः ।
श्यामो रोमचिताङ्गस्तीक्ष्णः सहसः सुरौद्रकर्मा च ॥२०॥
स्त्रीमित्रभागरसविन्मृदुलोऽल्पसुतश्च सद्गुणः शूरः ।
ताम्रो भास्वरवर्णो यानमतिः कुम्भपूर्वार्धे ॥ २१ ॥
आताम्रदारिताक्षः कृशः स्थिरोऽत्यल्पमूर्तिरलसः स्यात् ।
नैकृतिकः सुविषादी कृपणः कुम्भापरे सुशठः ॥ २२ ॥
ह्रस्वः पृथुचारुतनुर्महाललाटो बृहद्वदनवक्षाः ।
स्त्रीदयितो मीनार्धे प्रथमे सुयशाः क्रियापटुः शूरः ॥२३॥
दाता सुतुङ्गनासो निपुणो मेधान्वितः शुभदनेत्रः ।
नृपदयितः स्त्रीसुभगश्चारुर्मीनापरे सुवाक्यः स्यात् ॥ २४ ॥
चन्द्रार्कयोरेकतरे बलस्थे होरापतिः पश्यति केन्द्रगो वा ।
होरा यथोद्दिष्टफलप्रदा स्याद्भस्थसत्वस्य समुद्भवेषु ॥२५॥

इति कल्याणवर्मविरचितायां सारावल्यां होरागुणा नाम
अष्टचत्वारिंशोऽध्यायः ॥

[1] सुवेषो.

# एकोनपञ्चाशोऽध्यायः

दाता हर्ता दीप्तः क्षयोदयी सङ्गरप्रचण्डः स्यात् ।
प्रियविग्रहस्त्रिभागे मेषाग्रे बन्धुपूग्रदण्डश्च ॥ १ ॥
स्त्रीचञ्चलो विहारी रतिमान् गीतप्रियो मनस्वी स्यात् ।
मित्रार्थभाक् सुरूपः स्त्रीवित्तरुचिर्द्वितीये च ॥ २ ॥
गुणवान् परदोषकरश्चलसत्रयुतो नरेन्द्रसेवी स्यात् ।
स्वजनप्रियोऽतिधर्मस्तृतीयभागे प्रियादरोऽज्ञश्च ॥ ३ ॥
प्रियपानभोज्यनारीवियोगतप्तो वृषस्य पूर्वांशे ।
वस्त्रालङ्कारयुतो युवतिप्रकृतानुसारी स्यात् ॥ ४ ॥
सौम्यवपुस्त्रीसुभगो महावरो रूपधनयुक्तः ।
धनवान् स्थिरो मनस्वी लुब्धस्त्रीणां प्रियो द्वितीये स्यात् ५
चतुरोऽल्पभाग्यवीरो मलीमसः स्याद्धनान्युपादाय ।
सन्तप्यते तु पश्चाद्वृषस्य भागे तृतीये च ॥ ६ ॥
मिथुनादिमे दृगाणे पृथूत्तमाङ्गो धनान्वितः प्रांशुः ।
कितवो गुणी विलासी नृपाप्तमानो वचस्वी स्यात् ॥ ७ ॥
ह्रस्वाननस्वरूपः सौम्यवपुः सूक्ष्ममूर्द्धजतनुः स्यात् ।
धन्यो मृदुर्महाधीर्द्वितीयभागे प्रतापवान् सुयशाः ॥ ८ ॥
स्त्रीद्वेषणो वपुष्मान् महाशिराः शत्रुसंयुतः प्रांशुः ।
रूक्षनखाङ्घ्रिकरतलश्चलार्धविभृतो दृढस्तृतीये स्यात् ॥ ९ ॥
कर्कटकादिमभागे देवब्राह्मणरतश्चलो गौरः ।
कृत्यकरश्च परेषां सुधीः सुमूर्तिः शुभाङ्गनः सुभगः ॥१०॥
लुब्धः स्वाद्वदनपरः स्वप्नरतः स्त्रीजितोऽभिमानी स्यात् ।
सहजान्वितो विलासी चपलो बहुरुग् द्वितीये च ॥ ११ ॥
स्त्रीचञ्चलोऽर्थभागी विदेशनिरतः प्रियासवः साधुः ।
काननतोयानुरतो दुर्दृष्टिर्माल्यवांस्तृतीये स्यात् ॥ १२ ॥
सिंहादिद्रेष्काणे दाता भर्तारिनिर्जिगीषुः स्यात् ।
बहुधनयोषित्सुसुहृद्बहुनृपसेवकः सुसत्वश्च ॥ १३ ॥

सुरुचिरकारी दाता स्थिरो वपुष्मान् रणेप्सुः स्यात् ।
सुखभाक् श्रुतिधर्मरुचिर्विस्तीर्णमतिर्द्वितीये च ॥ १४ ॥
लुब्धः परस्वहरणे कल्यः स्तब्धो महामतिः कितवः ।
नायततनुमूर्त्तिः स्यान्नैकापत्यः प्रगल्भोऽन्त्ये ॥ १५ ॥
श्यामः सुवाग्विनीतः प्रांशुः सुकुमारमूर्तिरबलाद्ये ।
स्त्रीभ्योऽर्थभागनिष्ठो दीर्घशिरा मधुसमाक्षश्च ॥ १६ ॥
धीरो विदेशभागी शिल्पकथापण्डितः समरशौण्डः ।
वाचाटः श्रुतवाक्यो वनौकसां संमतो द्वितीये स्यात् ॥ १७ ॥
गीतापरार्द्धभागी सङ्गीतरतिर्नरेन्द्रदयितः स्यात् ॥
ह्रस्वस्वरूपवेषश्चान्ते पृथुदृक् शिरस्कश्च ॥ १८ ॥
कन्दर्परूपनिपुणस्तुलादिभागेऽध्वसेवज्ञः ।
श्यामकला पण्यरतो नियोगधीरः सुमेधावी ॥ १९ ॥
पङ्कजविशालनेत्रः सुरूपवाक् साहसः कलापी[1] स्यात् ।
ख्यातः स्ववंशवर्धितवृद्धानुचरो द्वितीये च ॥ २० ॥
चपलः शठः कृतघ्नो विरूपजिह्वोपचितमूर्त्तिः ।
नष्टसुहृद्द्रविणयशाः स्वल्पमतिर्भागके तृतीये स्यात् ॥ २१ ॥
गौरः स्थिरः प्रचण्डो रणोत्कटः स्यान्नरो विशालाक्षः ।
स्थूलविशालशरीरः कलिप्रियो वृश्चिकाद्यांशे ॥ २२ ॥
मृष्टान्नपानचतुरश्चलेक्षणो हेमगौरमूर्त्तिः स्यात् ।
कान्तः परवित्तयुतः शीलकलावान् द्वितीयेंऽशे ॥ २३ ॥
निश्मश्रुरोमहिंस्रः पिङ्गाक्षमहोदरः प्रहर्त्ता च ।
सहजच्युतस्तृतीये पीवरबाहुः सुधीरहृदयश्च ॥ २४ ॥
परिमण्डलाक्षवक्त्रो गणेषु मुख्यो धनुर्द्दगाणाद्ये ।
स्वोपचितस्वाचारस्तथा मृदुर्भवति सञ्जातः ॥ २५ ॥
शास्त्रार्थवित्प्रवक्ता क्रतुशतहर्त्ता द्वितीये च ।
मन्त्रभृतां श्रेष्ठतमस्त्वनेकतीर्थायतनचारी ॥ २६ ॥
बन्धुप्रधानचतुरः सतां गतिर्धर्मभाक् तृतीयेऽपि ।

---

१ विलापी.

कामी[1] पराङ्गनाभाक् रूपयशोभाजनो विजिष्णुश्च ॥ २७ ॥
व्यालम्बभुजः श्यामः प्रथितयशोरूपकान्तिशठः ।
स्मितभाषी मकराद्ये स्त्रीषु जितो वल्गुचेष्टधनयुक्तः ॥ २८ ॥
अल्पवदनश्च मध्ये चलः परस्त्रीधनापहर्ता स्यात् ।
चतुरः सतां गतिज्ञः प्रदानशीलो दुरन्तपादः स्यात् ॥ २९ ॥
वाचालः[2] कलुषकृशो दीर्घाङ्गः पितृवियुक्तश्च ।
लभते विदेशगमनाद्व्यसनानि मृगमुखस्यान्ते ॥ ३० ॥
स्त्रीमानयशोभूतिः स्फीतप्रभवो घटस्याद्ये ।
प्रांशुः कर्मसु निष्ठो धनवान्नृपसेवको जातः ॥ ३१ ॥
लुब्धः समर्थमधुरो गौरः पिङ्गोद्धताक्षहास्यधनः ।
उद्धृष्टवचा मतिमान् बहुमित्रः स्याद् द्वितीये तु ॥ ३२ ॥
दीर्घः शठः प्रतापी कृशोऽल्पबाहुः सुतार्थभाक् स्तब्धः ।
बह्वनृतोऽन्तर्विषमो विदारिताक्षो रतिविदन्त्ये ॥ ३३ ॥
मधुपिङ्गाक्षो गौरो मेधावी सत्क्रियारतिज्ञश्च ।
सुखभागी मीनाद्ये जलचर[3]युगले विनीतश्च ॥ ३४ ॥
नार्युपचारप्रवरो मृष्टान्न[4]रतिः परार्द्धभुक् [5]कारी ।
स्त्रीसज्जनातिदयितो वदतां श्रेष्ठो द्वितीये तु ॥ ३५ ॥
श्यामः कलासु निपुणः पृथु[6]पादसुहृत् प्रदानश्च ।
मृष्टान्नपानहास्यो मीनयुगान्त्ये भवेत्पुरुषः ॥ ३६ ॥

इतीरितोयं स्वगुणस्वभावो
द्रेक्काणजानां गुण[7]विद्धिकल्पैः ।
द्रेक्काण[8]गे वीर्यवति स्वदृष्टे
द्रेक्काणकल्पन्तु फलं विदध्यात् ॥ ३७ ॥

इति कल्याणवर्मविरचितायांसारावल्यां नष्टजातकाध्याये द्रेक्काणाध्यायो नामैकोनपञ्चाशोऽध्यायः ॥

१ मानी. २ वाचाटः. ३ चारयुतो. ४ रुचिः. ५ कामी. ६ दान. ७ गुणचिन्हकल्पैः. ८ णभे.

## पञ्चाशोऽध्यायः

अतोंशके लग्नगते तु वक्ष्ये वर्णस्वभावाकृतिलक्षणानि ।
प्रधानवीर्येंऽशपतौ शशीव तत्स्वामिराशिक्रमशो विधत्ते ॥१॥
अजसंस्थानमुखः स्यान्मेषाद्यांशेऽल्पनासिकाङ्गभुजः ।
चण्डध्वनिर्विरूपः संकुचिताक्षः कृशोऽक्षताङ्गश्च ॥ २ ॥
श्यामगुरुस्कन्धभुजो ह्रस्वललाटः सुजत्रुकः स्फुटदृक् ।
दीर्घास्यनसो मृदुवाक् तृतीयभागे कृशाङ्घ्रिसन्धिश्च ॥ ३ ॥
व्यालुप्तकेशगौरो व्यस्तभुजश्चारुनयननासश्च ।
वाक्पण्डितस्तृतीये जातस्तु कृशोरुजानुजंघश्च ॥ ४ ॥
विभ्रान्तदृक् प्रचण्डो ह्रस्वनसोऽटनखराङ्घ्रिरोमा च ।
अभ्रातृकः कृशः स्याच्चतुर्थनवभागजः पुरुषः ॥ ५ ॥
दृप्तो गजेन्द्रनयनः पृथुनासा भ्रूललाटको मध्ये ।
पीनोपचिताग्रतनुः खरतररोमाङ्कितनुकेशः ॥ ६ ॥
श्यामो मृदुर्मृगाक्षो गुरुः कृशस्फिक्कठोरुचरणः स्यात् ।
व्यस्तोदरकभुजांसः षण्ढो भीरुश्च बहुभाषी ॥ ७ ॥
दूर्वाङ्कुराभचपलः सितनेत्रः सप्तमे भवेत्पुरुषः ।
कुलटापतिर्नृशंसो विशालविस्तीर्णमूर्तिः स्यात् ॥ ८ ॥
वानरमुखप्रवक्ता खरपिङ्गतनुश्च गुह्यगदः ।
हिंस्रोऽनृतघातरतः सुहृत्प्रियोग्रः सदाष्टमजः ॥ ९ ॥
दीर्घः कृशो विहारी व्यस्तललाटश्रवोऽश्ववदनश्च ।
बह्वभिधानाभिरतस्त्वनृजुर्नवमांशजो भवति ॥ १० ॥

इति मेषे ॥

समकृष्णतनुस्तब्धः पूर्वमघान्त्येऽन्त्यकर्मा स्यात् ।
नीचः प्रकृतिविरुद्धो विषमाक्षिनिरीक्षणो वृषस्याद्ये ॥ ११ ॥
गम्भीरदृगलसात्मा विनतशिरावक्रकश्च लघुमेधाः ।
प्रतिकूलकर्ममिथ्याबहुप्रलापी द्वितीये स्यात् ॥ १२ ॥

---

१ गतेपि. २ रुढः. ३ ततो.

मृदङ्गवान्वपुष्मान् सुनसस्पष्टायताक्षवृहदङ्गः ।
यज्ञादिकर्मनिरतः स्थिरपार्ष्णिकरस्तृतीयनवमांशे ॥ १३ ॥
ह्रस्वोदरः सुरोषो मेषाक्षः पिङ्गलस्त्वधनयुक्तः ।
परधनहरणाभिरतश्चतुर्थभागे वृषस्य नरः ॥ १४ ॥
व्यालः सुतुङ्गघोणो महर्षभाकारवक्रघनकेशः ।
स्यात्पञ्चमे विलासी वृहद्भुजस्कन्धकटिगौरः ॥ १५ ॥
स्वक्षस्थिरः सुकेशः स्निग्धतनुर्वल्गुवाक् प्रगल्भः स्यात् ।
माधुर्यहास्यनिरतः कृशः सुनिपुणो भवेत्षष्ठे ॥ १६ ॥
मृतसुतयुवतीषु रतो मनाक्प्रलम्बाग्रनासिकाक्षः स्यात् ।
उद्वृद्धाङ्गः स्वजनद्वेषी गुरुपादसूक्ष्मकेशश्च ॥ १७ ॥
व्याघ्रेक्षणः सुदशनस्त्वजितस्फुटनासिकोऽल्पकर्मः स्यात् ।
उद्वृत्तनीलकेशोग्रनखो मुखरस्तथाष्टमजः ॥ १८ ॥
मान्योऽल्पसत्वभीरुः क्रोधी समरुचिरमूर्तिकितवः स्यात् ।
सञ्चितधनः प्रसिद्धः कृशस्त्वधस्तात् प्रलाप्यन्ते ॥ १९ ॥

इति वृषभे ॥

रोमोपचितांसभुजो घनासितापाङ्गदृक् तथोच्चनसः ।
दूर्वाकाण्डश्यामः कृशाङ्घ्रिपाणिस्तृतीयभवनाद्ये ॥ २० ॥
घटशीर्षो शुचिकर्मा घातरुचिर्मध्यलग्नघोणः स्यात् ।
बहुभाषी बहुचेष्टो द्वितीयभागे तु विग्रहाधिपतिः ॥ २१ ॥
गौरोऽतिरक्तनयनः सुनासिकः समतनुः सुमेधाः स्यात् ।
दीर्घाननो सितभ्रूर्वाचाचतुरस्तृतीयेंशे ॥ २२ ॥
सुभ्रूललाटकामी नीलोत्पलमूर्तिविपुलवक्षाः स्यात् ।
सितवक्त्रो[1] मृदुवक्त्रः[2] प्रशस्तरोमाचितश्चतुर्थेऽशे ॥ २३ ॥
पृथ्वाननो बृहत्स्फिक् पीवरवक्षोभुजश्च खलः ।
स्थूलशिरा मायावी सितानुकूलनयनस्तु पञ्चमजः ॥ २४ ॥
मध्वीक्षणः प्रलापी व्यस्तललाटः समस्सुतनुः ।
कितवश्चलश्च रुधिरोष्ठरदः षष्ठे तु सत्वयुतः ॥ २५ ॥

१ दन्तो. २ वक्रं.

ताम्रारुणाक्षवर्णः समुन्नताक्षो विशालवक्षाः स्यात् ।
शिक्षासु शिल्पनिपुणो हास्यरतिः सप्तमे जातः ॥ २६ ॥
श्यामो गुरुर्मनस्वी ललितो मधुराभिधानश्च ।
व्यस्तविवृद्धशरीरो दीर्घासितदृक् कलाविदष्टमजः ॥ २७ ॥
वृत्ता सितदृक् सुतनुः सिद्धो मेधाबलो रतिज्ञः स्यात् ।
विज्ञानकाव्यनिरतो नवमे जायेत मिथुनस्य ॥ २८ ॥

इति मिथुने ॥

निर्मलचारुसुगौरः सुमूर्द्धजः स्याद्विशालकुक्षिश्च ।
मङ्गलमुखोन्नताक्षस्तन्वङ्गभुजः कुलीराद्ये ॥ २९ ॥
रक्तच्छवि[1]चरणोढः कलाप्रियः स्याद्विडालमुखनेत्रः ।
कर्किद्वितीयभागे त्यागी कृशजानुजङ्घश्च ॥ ३० ॥
गौरः सुनेत्रवाग्मी सुकुमारस्थूलयोषिदङ्गश्च ।
धीमान्मृदुकर्मरतस्तृतीयभागे भवेदलसः ॥ ३१ ॥
श्यामच्छविर्नतभ्रूर्विलासपीनोन्नतः सुनासाक्षः ।
क्षीणः पुरुषो दाता सुजातिकार्यश्चतुर्थे स्यात् ॥ ३२ ॥
घण्टाशिरोनतास्यः सुसंहतभ्रूः सुदीर्घबाहुः स्यात् ।
सेवारतो विकर्मा मध्ये दुर्मर्षणोऽल्पमेधाश्च ॥ ३३ ॥
दीर्घविशालशरीरः प्रशस्तनयनो बहुप्रतापः स्यात् ।
गौरः सुवंशघोणो वक्ता षष्ठे च पृथुदन्तः ॥ ३४ ॥
भिन्नशिरोरुहरोमा बृहत्तनुः स्यात्सिरालजङ्घश्च ।
परगृहरक्षणशीलः काकाकारश्च सप्तमजः ॥ ३५ ॥
घण्टाशिराः कुशिल्पी सुमुखभुजाङ्गश्च कूर्मगतिः ।
मध्यविलग्ननसः स्यादष्टमभागे तु कुं[2]ष्ठश्च ॥ ३६ ॥
गौरो झषनेत्रगुरुर्मृदूदरोऽथ पृथुपीनवक्षाः स्यात् ।
दीर्घहनुर्लम्बोष्ठो महोरुकृशजानुगुल्फोऽन्त्ये ॥ ३७ ॥

इति कर्कटके ॥

१ छवीरणोग्रः. २ कृष्णश्च.

मन्दोदरः प्रचण्डो रक्ताग्रनसो बृहच्छिराः शूरः ।
उन्नतमांसलवक्षाः सिंहे प्रथमे भवेद्भागे ॥ ३८ ॥
उन्नतविततललाटश्चतुरश्रतनुर्विलोमनेत्रश्च ।
दीर्घभुजोन्नतवक्षाः पृथूग्रघोणो द्वितीयेंशे ॥ ३९ ॥
रोमान्वितायतभुजश्चकोरनयनश्चलस्त्यागी ।
उन्नासिकस्तृतीये स्निग्धतनुर्बाहुवृत्तगलः ॥ ४० ॥
घृतमण्डगौरगात्रो दीर्घासितलोचनो मृदुशिरोजः ।
भिन्नध्वनिश्चतुर्थे पृथुकरचरणश्च भेककुक्षिः स्यात् ॥ ४१ ॥
घण्टाशिरोऽल्पकेशो सितघोणाक्षश्च लोमशाङ्गतनुः ।
लम्बोदरप्रचण्डो दंष्ट्रोत्कटपीनहृन्मध्ये ॥ ४२ ॥
स्रस्ताल्परोममूर्तिः स्निग्धसमासितविलोचनो दीर्घः ।
श्यामस्त्रीणां चतुरो विकत्थनो वाक्यपण्डितः षष्ठे ॥ ४३ ॥
दीर्घाननः सिरालः पीनतनुः स्त्रीषु दुर्भगः कृष्णः ।
स्यात्सप्तमे सुचण्डो रोमचितः कूटनिष्ठुराभाषी ॥ ४४ ॥
उत्कृष्टवाक् स्थिराङ्गः सुभगो[1] गम्भीरदृग्विकर्मा च ।
निःस्वः कूटकरः स्यादष्टमभागे प्रसूतश्च ॥ ४५ ॥
रासभमुखोऽसिताक्षो व्यालम्बभुजः सुपार्ष्णिजङ्घश्च ।
श्वासनिपीडितवक्षा नवमांशे जायते मनुजः ॥ ४६ ॥

॥ इति सिंहे ॥

सारङ्गाक्षो वक्ता प्रदानसम्भोगवान् धनाढ्यश्च ।
श्यामोन्नतहृदयः स्यात्षष्ठे प्रथमांशके जातः ॥ ४७ ॥
पूर्णाननः सुचक्षुः[2] स्निग्धो[3] मृदुवादशीलश्च ।
लम्बोदरश्चलः स्याद्द्वितीयभागे महोरुश्च ॥ ४८ ॥
स्फुटनासिकास्फुटः स्यात्प्रशस्तपादश्च पीनपाद[4]भुजः ।
विस्पष्टवाक् च गौरः कन्यासु सुहृत्तृतीयेंशे ॥ ४९ ॥
श्रुतवान् स्त्रीषु च रमते सुकुमारो मधुररक्तगौरश्च ।
तीक्ष्णश्चतुर्थभागे प्रबोधनोधःकृशो द्विमूर्धा च ॥ ५० ॥

---

१ सुभ्रूर्ग. २ वक्षाः. ३ पिशुनः कलहप्रियः सुगूढवयाः. ४ पाणि.

स्थूलोष्ठबाहुरुन्नततनुः पृथुशिरोरुहांसः स्यात् ।
पञ्चमजः पृथुवक्षाः पराश्रयोद्बद्धजङ्घश्च ॥ ५१ ॥
स्निग्धच्छविः सुवाक्यः शस्ततनुः शास्त्रकृतमतिप्रचुरः ।
लिपिलेख्यकलाभिज्ञः सुमनाः षष्ठांशजो विहारी च ॥५२॥
ह्रस्ववदनोन्नतांसः स्निग्धभुजोऽन्ते च केशगौरः स्यात् ।
सप्तमजः पृथुजठरः पृथुतरचरणोऽम्बुभीरुश्च ॥ ५३ ॥
सुकुमारगौरदीर्घश्चित्रोन्नतदृक् प्रचण्डमानी स्यात् ।
व्यालम्बपीनबाहुः पिङ्गलरोमाष्टमे जातः ॥ ५४ ॥
ख्यातो मृदुसुखमूर्त्तिर्विशालनेत्रो बलासदृशसत्वः ।
चतुरो नवमेंशे स्यान्नतांसलेख्यादिविद्वांश्च ॥ ५५ ॥

॥ इति कन्यायाम् ॥

गौरो विशालनेत्रः श्लाघी दीर्घाननोऽर्थगोप्ता स्यात् ।
नवपण्यकर्मकुशलस्तुलाधरार्द्यंशजः सुविख्यातः ॥ ५६ ॥
प्लुतमण्डलनेत्रः स्यात्करालदन्तो निमग्नमध्यस्तु ।
युगले विस्मृतहृदयः कुतनुर्घनसंहतभ्रूश्च ॥ ५७ ॥
गौरोऽश्वमुखः सुरदो महोन्नताक्षः कृशोऽपि लब्धयशाः ।
दीर्घकरोरुहघोणस्तृतीयजः स्यात्सुचरणश्च ॥ ५८ ॥
तन्वंसबाहुभीरुस्तून्नतदन्तः कृशो मृगतरलदृक् ।
ह्रस्वनसः सुविषादी श्यामो शीलश्चतुर्थजो भवति ॥ ५९ ॥
गम्भीरदृक् स्थिरात्मा सुहृत्प्रियः पञ्चमे ह्यमानी स्यात् ।
खरकेशः समनेत्रो मध्यप्रतिलग्नघोणदृसश्च ॥ ६० ॥
पीनाङ्गो गौरः स्याद्विशालनेत्रः सुनासिकावंशः ।
स्निग्धनखः सुनयज्ञः षष्ठेंशे शास्त्रविज्ञातः ॥ ६१ ॥
रक्तावदातमतिमान्[१] गुरुह्रस्वतनुः कृशो ललाटे स्यात् ।
लुब्धः प्रचण्डदुर्गः सप्तमभागे मनःस्वी च ॥ ६२ ॥
तुङ्गांसगण्डभोक्ता कठिनतनुर्दीर्घकृष्णभ्रूः ।
निर्निक्तवाक् प्रशान्तः सद्वक्षस्त्वर्धमस्तकोऽष्टमजः ॥६३॥

१ रति.

स्वक्षः प्रसन्नगौरः समचारुतनुः पटुः कलाभिरतः ।
दाक्षिण्यहास्यनिरतो विटस्वभावो भवेन्नवमे ॥ ६४ ॥

॥ इति तुलायाम् ॥

ह्रस्वोन्नतोष्ठघोणः सुललाटः स्यात् दृढाङ्गगौरश्च ।
दर्दुरकुक्षिर्घटकोऽष्टमराशौ प्रथमनवभागे ॥ ६५ ॥
गौरः पृथ्वायतहृद्बाहुस्ताम्रोग्रदृग् द्वितीये स्यात् ।
उद्वृत्तबलनिहन्ता साहसकृदनल्पकेशश्च ॥ ६६ ॥
प्राज्ञो दृढांसबाहुः प्रयत्नकोशो विशुद्धवाक्यः स्यात् ।
कानीनको वपुष्मान् गौरो रुचिराधरस्तृतीयेंशे ॥ ६७ ॥
परदारद्रोहरतिः क्षेप्ता धीरश्चतुर्थजो दीर्घः ।
श्यामोऽसितकेशाक्षो नटप्रगल्भश्च पीनरोमांसः ॥ ६८ ॥
गम्भीरस्ताम्राक्षो मग्ननसः पञ्चमे धीरः ।
मृष्टोदरोग्रकर्मा व्यस्तदृढाङ्गो यशस्वी स्यात् ॥ ६९ ॥
धृष्टो वरिष्ठबुद्धिः पृष्ठोच्चनसो गभीरसत्वः स्यात् ।
सुनसः प्रचण्डकर्मा षष्ठे दक्षोऽल्पकचघनभ्रूश्च ॥ ७० ॥
दारितमुखः स्थिराङ्गः प्रविकीर्णरदः शिरावनद्धाङ्गः ।
निम्नोदरः स्रुताक्षः स्रस्ततनुः सप्तमे भवेदंशे ॥ ७१ ॥
स्फुटिताग्रनसः कालो विपन्नशीलो मलीमसाङ्गः स्यात् ।
भिन्नोत्कटैः शिरोजैः सन्त्यक्तमतिस्तथाष्टमजः ॥ ७२ ॥
गौरो मृगाकृतिमृदुः प्रशान्तपिङ्गाक्षरोमदृढपीनः ।
सुसमेतश्च गुरूणां मतः प्रजातो नवमभागे ॥ ७३ ॥

॥ इति वृश्चिके ॥

सुबृहन्नसोजदृष्टिः स्फुटाग्रभाषी सुदन्तरोमा च ।
गौरः सुबुद्धवृषणश्चापाद्यांशे प्रचण्डः स्यात् ॥ ७४ ॥
प्रोत्तुङ्गशिराः स्थिरविद्विस्तीर्णाक्षो गुरुस्फिग्गूरुश्च ।
विकृताक्षनसो दीर्घो महाहनुः स्याद्द्वितीयेंशे ॥ ७५ ॥
शिक्षाशास्त्रमतिज्ञः प्रगल्भगम्भीरमूर्त्तिसुनयश्च ।
स्त्रीवल्लभो मनस्वी तृतीयजो हास्यशिल्पज्ञः ॥ ७६ ॥

दक्षो मधुमण्डलदृक् गौरः कृच्छ्रप्रवृद्धकुक्षिः स्यात् ।
प्राज्ञोऽटनः सुकेशः पृथुशुभमूर्त्तिश्चतुर्थे स्यात् ॥ ७७ ॥
पृथुकण्ठनेत्रवदनः प्रवृद्धहरिविग्रहो महाभ्रूः स्यात् ।
पीनोन्नतांसहन्ता पञ्चमजो रूढरोमदृढबुद्धिः ॥ ७८ ॥
स्निग्धासितान्तपृथुदृक् महाललाटः सुवृत्तिकाव्यरतः ।
पृथुपीनमुखो हीनः षष्ठे विद्वान् कथाभिरतः ॥ ७९ ॥
श्यामो मृदुर्वचस्वी तुङ्गशिराः सङ्ग्रहानुसन्धिरतः ।
दीर्घो विशालनयनो दाक्षिण्यपटुश्च सप्तमजः ॥ ८० ॥
चिपिटाग्रनासिकः स्याद्विस्तीर्णशिराः सुबद्धवैरश्च ।
विभ्रान्तदृक् प्रलापी गुरुष्वभिमतोऽष्टमांशभवः ॥ ८१ ॥
गौरो हयाकृतिमुखो दीर्घासितदृक् तथाल्पवाक्यः स्यात् ।
सत्यः सतां विषादी नवमे कुटिलोरुजङ्घश्च ॥ ८२ ॥

॥ इति धनुषि ॥

विरलाग्ररदः श्यामः प्रभिन्नवाक् खरसिरोरुनखजानुः ।
गीताध्वहास्यनिरतो मकराद्ये बलधनः कृशाङ्गः स्यात् ८३
अलसशठः कुटिलनसो गीताभिरतिर्विशालदेहश्च ।
प्रचुराङ्गनासु निरतो बहुभाषी स्याद्द्वितीयजः कल्प्यः ॥८४
गान्धर्वकलाकामः ख्याताङ्गो गौरदृक् सुनसः ।
बहुमित्रबन्धुरतिमान् तृतीयजः स्विष्टकर्मा च ॥ ८५ ॥
रक्तासितवृत्ताक्षो महाललाटभुजदुर्बलाङ्गकरः ।
भवति हि विकीर्णकेशश्चतुर्थजो विरलदन्तवाक्यः स्यात् ८६
उद्दण्डघोणकुक्षिर्भवति हि भोक्ता सुनासिकावंशः ।
श्यामो वृत्तोरुभुजः पञ्चमभागे स्थिरारम्भः ॥ ८७ ॥
स्निग्धच्छविः सुवेषः कामरतः सूक्ष्मसमरदसुवक्ता ।
षष्ठांशजः पृथुहनुर्महाललाटः पुमान् भवति ॥ ८८ ॥
श्यामोलसः सुभाषी रूक्षितदेहो बृहत्तनुः कठिनः ।
मृदुपादपाणिमतिमान्सप्तमजः शीलसम्पन्नः ॥ ८९ ॥

---

१ भाषी. २ कुञ्चित.

गम्भीरदृक् सुघोणो रक्तास्यो भिन्ननखशिरोजः स्यात् ।
उद्वृद्धतनुः शक्तोऽष्टमजो घटपृथुललाटश्च ॥ ९० ॥
विपुलाक्षिहृत्सुमेधाः पूर्णमुखो गीतवाद्यनिरतश्च ।
माधुर्यसत्वयुक्तः साधुर्नवमे भवेत्सुजनः ॥ ९१ ॥

॥ इति मकरे ॥

श्यामो मृदुः कृशाङ्गः पीनहनुः शास्त्रकाव्यमतिः ।
कामी रतिमान्कान्तः कुम्भस्याद्यांशके भवेज्जातः ॥ ९२ ॥
त्वङ्नखदृष्टिशिरोजैः खरैश्च सुविपन्नवत्सलः साधुः ।
दीर्घो विशिरा मूर्खो द्वितीयभागे भवेज्जातः ॥ ९३ ॥
संसक्ततनुः प्रमदाप्रियश्च वैडूर्यकान्तिधरः ।
शास्त्रार्थवित्प्रयोक्ता तृतीयनवभागसंजातः ॥ ९४ ॥
कान्तानुरतो गौरो विदारितास्यो रिपुप्रणाशकरः ।
गम्भीरधीरसत्वश्चतुर्थजो भोगरतियुक्तः ॥ ९५ ॥
स्पष्टार्थवित्कलाज्ञः खररोमधराङ्घ्रिरुग्रः स्यात् ।
संरुद्धगण्डकर्णः पञ्चमजः कृष्णवर्णश्च ॥ ९६ ॥
व्याघ्राननः प्रगल्भः कुञ्चितकेशः सुनिश्चितार्थश्च ।
व्यालमृगोरगहन्ता षष्ठेंशे वल्लभो नृपतेः ॥ ९७ ॥
मेषाक्षिमुखस्तीक्ष्णो ग्राम्यरतिस्त्रीषु परिभूतः ।
पित्तरुगर्दितदेहः सप्तमजः सत्वधृतियुक्तः ॥ ९८ ॥
स्थिरसत्वबुद्धिरतिमान् नरेन्द्रयोधो नरेश्वरः सुभगः ।
स्थूलरदो विपुलाक्षः कुम्भे स्यादष्टमेंशके पुरुषः ॥ ९९ ॥
श्यामः समग्रवंदनाविशेषितः सुधनदारपुत्रश्च ।
नवमांशजः सुवाक्यः प्रथितः शक्तो भवेत्पुरुषः ॥ १०० ॥

॥ इति कुम्भे ॥

गौरोऽपि रक्तदेहः प्रभामृदुस्त्रीमतिप्रचलचित्तः ।
ह्रस्वगलः कृशमध्यो मीनस्याद्यांशके पुरुषः ॥ १०१ ॥
[2]पृथुपीनभुग्ननासः (?) क्रियापटुर्मांसभुग्रुचिरदेहः[1] ।

---

१ दशनो. २ पृथुपीनसुग्ननासः.

काननपर्वतचारी बृहच्छिराः स्याद्वितीयांशे ॥ १०२ ॥
गौरः शठः सुचक्षुः शस्ततनुर्धर्मवान् सुविद्वांश्च ।
दाक्षिण्यवान् विनीतस्तृतीयजो रूपवांश्चतुरः ॥ १०३ ॥
गुणवान् विपन्नशीलः प्रवृद्धसेवी क्रियापटुर्विद्वान्[1] ।
सत्वाधिको नयज्ञस्तुङ्गनसः स्याच्चतुर्थे तु ॥ १०४ ॥
दीर्घोऽसितः प्रतापी तुङ्गाङ्गः स्वल्पनासिकः स्वक्षः ।
हिंसारतिः शुभरदो दुष्प्रसहः पञ्चमे प्रतापी स्यात् ॥ १०५॥
कान्तः प्रतापगुणवान् प्रसन्नवंशोऽल्पनासिको मानी ।
तिर्यग्वदनः ख्यातः षष्ठेंशे स्यात्तथा निपुणः ॥ १०६ ॥
पुरुषाभिमानपरकृद्धर्मरुचिः श्रेष्ठगश्च सचिवः स्यात् ।
प्रबलो विषादशीलः शठोऽस्थिरः[2] सप्तमे भागे ॥ १०७ ॥
दीर्घो बृहच्छिराः स्यात्कृशोऽलसो रूक्षनेत्रकेशश्च ।
मन्दात्मजोऽर्थनिरतो रणकुशलो ह्यष्टमे भागे ॥ १०८ ॥
ह्रस्वो मृदुः सुधीरो विशालवक्षोक्षिनासिकः स्निग्धः ।
विहिताङ्गबुद्धिगुणवान् नवमेंशे स्यात्पुमान् ख्यातः ॥१०९॥

॥ इति मीने ॥

यत्प्रोक्तांशादिफलं[4] द्वादशभागेऽपि तत्फलं वाच्यम् ।
सप्तमभागसमानं शेषेषु विनिर्दिशेत्प्राज्ञः ॥ ११० ॥

इति कल्याणवर्मविरचितायां सारावल्यां नष्टजातकाध्याये नववर्गगुणचिन्ता नाम पञ्चाशोऽध्यायः ॥

## एकपञ्चाशोऽध्यायः

प्रश्नकाले विलग्नस्य पूर्वार्द्धेऽप्युत्तरायणे ।
अपरे दक्षिणे ब्रूयाज्जन्मसम्पृच्छतो बुधः ॥ १ ॥
ऋतुर्वाच्यो दृगाणांशे लग्नसंस्थेऽपि वा ग्रहैः[5] ।
अयनस्य विलोमे तु परिवर्त्तः परस्परम् ॥ २ ॥
शशिज्ञगुरुभिः सार्धं सितलोहितसूर्यजैः ।

१ पटुर्वीरः. २ शटः ३ वित. ४ प्रोक्तराशि. ५ गृहैः.

द्रेक्काणेऽर्धे भवेत्पूर्वे मासः पूर्वे[1] परे परः ॥ ३ ॥
अनुपातात्तिथिः कल्प्या केचिदाहुरिनांशजाम् ।
लग्नभागैर्द्विरभ्यस्तैः पञ्चभिर्लभ्यते गुरुः ॥ ४ ॥
वयोनुमानाद्वर्षाणि द्वादश द्वादश क्षिपेत् ।
द्युरात्रिनामधेयेषु विलोमाज्जन्मसम्भवः ॥ ५ ॥
लग्नभागैः क्रमेणैव वेला मृग्याऽनुपाततः ।
लग्नत्रिभागराशीनां यो बली जन्मकृद्भवेत् ॥ ६ ॥
शीर्षादि संस्पृशन् प्रष्टा पृच्छेत्तद्राशिमादिशेत् ।
यावद्गतः शशी लग्नाच्चन्द्रात्तावति जन्मभः ॥ ७ ॥
मीनोदये वदेन्मीनं लग्नांशसदृशोदयम् ।
लग्नाद्धानुदृगाणे च यावत्यर्काच्च तावति ॥ ८ ॥
विलग्नं कथयेत्प्राज्ञ इति शास्त्रस्य निश्चयः ।
लग्नगे वीर्यगे वाऽपि च्छायाङ्गुलहृते हृते ॥ ९ ॥
रविभिर्जन्मशिष्टं हि कथयेदविशङ्कितः ।
तिष्ठतः शयनस्थस्य निविष्टस्योत्थितस्य च ॥ १० ॥
लग्नादिकेन्द्रवेश्मानि वदेज्जन्मविधौ क्रमात् ।
भावं विचार्य सकलं यद्यत्तुल्यं तु तत्तथा ॥ ११ ॥
संस्कारनाममात्राद्विगुणा च्छायांगुलैः समायुक्ताः ।
त्रिघनविभक्ताच्छेषं नक्षत्रं तद्धनिष्ठादि ॥ १२ ॥
वृषसिंहौ दशगुणितौ वसुभिर्मिथुनालिकौ वणिङ्मेषौ ।
मुनिभिः कन्यामकरौ बाणैः शेषाः स्वसंमितैरेव ॥ १३ ॥
गुरुणा कुजेन भृगुणा बुधेन्दुभान्वार्किभिः क्रमशः ।
वर्षर्तुमासतिथयो द्युनिशाभनवांशवेलाश्च ॥ १४ ॥
एवं क्रमेण हृत्वा स्वविकल्पविभाजिताच्छेषम् ।
एवं भवन्ति सर्वे नवदानविशोधने च पुनः ॥ १५ ॥
यवनेन्द्रदर्शनाद्यैः कथितं तदिहात्र सर्वमेव मया ।
किन्तु स्फुटं न सर्वं स्पष्टं सारस्वतं चिन्त्यम् ॥ १६ ॥

---

१ पूर्वः.

पादत्रितयं विदलं दिनरजनीमानयोः क्रमात्क्रमशः ।
पृच्छकराशिसमानैर्दिवसनिशासंज्ञिताः पिण्डम् ॥ १७ ॥
वारघ्नमनिर्हृताग्रं प्रोद्गच्छति तावदेव नक्षत्रम् ।
अश्विमघामूलाद्यं नवकं नवकं क्रमादृक्षम् ॥ १८ ॥
तल्लिप्तासप्तहृताच्छेषाद्वारो भवेच्च ऋक्षादि ।
शेषं प्राग्वत्कार्यं पृच्छकसूर्यादिभिर्दायम् ॥ १९ ॥
उद्गतदशा व्यतीता गम्याथ विलोमतो भवेन्नित्यम् ।
तावत्संख्या योज्या नष्टविधौ कालपरिमाणे ॥ २० ॥

इति कल्याणवर्मविरचितायां सारावल्यां नष्टजातकाध्यायो नामैकपञ्चाशोऽध्यायः ॥

---

## द्विपञ्चाशोऽध्यायः ।

उक्तो हि यवनवृद्धैरष्टकवर्गो निवेदयति पुंसाम् ।
हेतुं शुभमशुभं वा प्रतिदिवसं संभवन्तमिह ॥ १ ॥
स्वात्केन्द्रायनवाष्टवित्तगृहगो भौमार्कसून्वोरवि-
र्जीवादायनवात्मजारिषु सितात् षड्द्वादशास्तस्थितः ।
चन्द्राद्वृद्धिषु बोधनात्सनवधीरिःफेषु लग्नाच्छुभः
साम्बुद्वादशगोऽष्टवर्गविधिना संशोधितो भास्करः ॥ २ ॥
लग्नाद्भ्रातृदशायशत्रुषु शशी सास्तादिषु स्वाच्छुभः
भौमात्सार्थनवात्मजेषु रवितः साष्टाङ्गनाथो गुरोः ।
केन्द्रायाष्टधनेषु धर्मसुखधीत्र्यायास्तखस्थः सितात्
केन्द्रायत्रिसुताष्टगः शशिसुताद्धर्मायषट्स्वर्कजात् ॥ ३ ॥
भौमो वृद्धिषु सात्मजासु रवितः साद्यासु लग्नाच्छुभः
चन्द्रात्षट्त्रिफलेषु केन्द्रविवरैस्वाप्तिस्थितः स्वाद्गृहात् ।
धर्मायाष्टमकण्टकेषु रविजाज्ज्ञात्र्यायवीशत्रुषु
शुक्रादन्त्यभवारिमृत्युषु गुरोः षड्लाभकर्मान्त्यगः ॥ ४ ॥
ज्ञोऽष्टायादिशुभार्थबन्धुषु सुतभ्रातृस्थितो भार्गवात्
भौमार्क्योः सदशास्तगो रिपुभवच्छिद्रान्त्यसंस्थो गुरोः ।

---

१ निभृताग्रं. २ विनवं सनवं. ३ पृच्छादि. ४ प्राप्ति.

प्रास्यन्त्यारितपःसुतेषु तपनात् स्वात्सत्रिकर्मादिषु
स्वाज्ञायारिनवाष्टमेषु शशिनो लग्नात्सपूर्वाच्छुभः ॥ ५ ॥
केन्द्रायास्तधनेषु भूमितनयात्स्वात्सत्रिषु ज्ञाह्मणो
भानोः सत्रिनवेषु धर्मदशधीलाभारिगो भार्गवात् ।
धर्मायास्तधनात्मजेषु शशिनः कोणात् त्रिषड्धीव्यये
स्वाज्ञायाम्बुनवारिपुत्रतनुषु ज्ञात्सास्तगस्तूदयात् ॥ ६ ॥
लग्नादातनयायरन्ध्रनवगश्चन्द्रात्सितः सव्ययात्
स्वात्साज्ञेषु शुभो यमान्नवदशात्मायाष्टपञ्चाम्बषु ।
त्र्यन्त्यायारिसुहृन्नवेषु रुधिराद्रिःफायरन्ध्रेष्विनात्
ज्ञात्र्यायारिनवात्मजेष्वथ गुरोर्धीखाष्टधर्मायगः ॥ ७ ॥
स्वात्र्यायात्मजषट्त्रिकेषु रविजः सान्त्याम्बरस्थः कुजात्
भानोः केन्द्रधनायमृत्युषु तनोस्त्र्यायारिखाद्याम्बुगः ।
आज्ञायाष्टनवान्त्यशत्रुषु बुधादिन्दोर्भवारित्रिषु
शुक्रादन्त्यभवारिषु द्विजवरात् स्वास्यायधीशत्रुगः ॥ ८ ॥
इत्युक्तं शुभमन्यदेवमशुभं चारक्रमेण ग्रहाः
शस्ताशस्तविशेषितं विदधति प्रोत्कृष्टमेतत्फलम् ।
स्वर्क्षस्वोच्चसुहृद्गृहेषु सुतरां शस्तं त्वनिष्टं समं
स्वोच्चस्वामिगता दशापतिबलाद्धन्त्यष्टवर्गोद्भवम् ॥ ९ ॥
रविरुधिरौ भवनं प्रविशन्तौ गुरुभृगुजौ गृहमध्यसमेतौ ।
शनिशशिनौ खलु निर्गमकाले शशितनयः फलदस्तु सदैव १०

इति कल्याणवर्मविरचितायां सारावल्यां अष्टकवर्गाध्यायो नाम द्विपञ्चाशोऽध्यायः॥

## त्रिपञ्चाशोऽध्यायः ।

दैवविदां नीतिकरं विश्वसनीयं समस्तलोकस्य ।
कनकाचार्यस्य मताद्वियोनिसंज्ञं प्रवक्ष्यामि ॥ १ ॥

---

१ त्सायकर्मत्रिगः. २ स्वाया. ३ नवरिःफपुत्र. ४ स्वादायात्मज. ५ प्रास्या.
६ स्वस्वस्वामिगतं. ७ प्रीतिकरं.

